# बालसंस्कृतम्

युगाब्दः ५१२२, मेष-कर्क-सङ्क्रान्तिः, अप्रैल-जुलाई-२०२१ प्रथमाङ्कः

**प्रधानसम्पादकः**

डॉ० वाचस्पतिमिश्रः

अध्यक्षः, उत्तरप्रदेशसंस्कृतसंस्थानम्



**परामर्शदाता**

शोभनलाल–उकिलः

उपाध्यक्षः, उत्तरप्रदेशसंस्कृतसंस्थानम्



**प्रकाशकः**

पवनकुमारः (आई०ए०एस०)

निदेशकः, उत्तरप्रदेशसंस्कृतसंस्थानम्



**प्रबन्धसम्पादकः**

दिनेशकुमारमिश्रः



**सम्पादकः**

सुधिष्ठकुमारमिश्रः



**सम्पादकसदस्याः**

गवीशद्विवेदी, नूतन विष्णु रेग्मी (सहसम्पादकः)

डॉ० रत्नेश्वरमणित्रिपाठी, अंशुगप्ता



**चित्रकारः – दिलीपशर्मा**



**सम्पर्कसङ्केतः**

उत्तरप्रदेशसंस्कृतसंस्थानम्

नव–हैदराबाद, लखनऊ–226007

दूरभाष : 0522–2780251, 2781352

ईमेल : balasamskritam@gmail.com


© उत्तरप्रदेशसंस्कृतसंस्थानम्, लखनऊ



**मुद्रकः** शिवम् आर्ट्स

512/569, दूसरी गली, लखनऊ–226007

**ग्राहकशुल्कविवरणम्**

**प्रत्यङ्कम् - रु० 25/-; वार्षिकम् - रु० 250/-**


## सम्पादकीयकम्

**अयि बालमित्राणि !**

सादरं वन्दनानि।

यदा-यदा अस्माकम् इच्छाः परिपूर्णाः भवन्ति तदा-तदा अवश्यम् अस्माकम् आनन्दः भवति। अस्माकं शिक्षकाः, अभिभावकाः, कुटुम्बसदस्याः च अस्माकम् इच्छाः सर्वदा पूरयन्ति। तदर्थं च सर्वदा प्रयत्नशीलाः भवन्ति। ते सर्वे सदा अस्माकं सुखसमृद्धिविषये प्रयत्नं कुर्वन्ति। अस्माकम् आनन्देन तेषाम् अपि आनन्दः भवति।

ये अस्माकम् आनन्दविषये सर्वदा चिन्तयन्ति तेषां विषये अपि अस्माकं चिन्तनम् आवश्यकम्। तेषां सर्वेषाम् आनन्दर्थं वयम् अध्ययनं कुर्मः। तेषां वचनं पालयामः। तेषां कार्ये सहयोगं कुर्मः। तेषाम् अपेक्षां पूरयामः। सत्यं वदामः। सर्वैः सह सानन्दं वार्तालापं कुर्मः।

यादृशश्रवणेन सर्वेषाम् आनन्दः भवति तादृशविषयाणां वयं सङ्ग्रहणं कुर्मः। यादृश-कथनेन जनाः आनन्दम् अनुभवन्ति तादृशानि वाक्यानि वयं वदामः। यादृश–व्यवहारेण आचरणेन च सर्वे सुखम् अनुभवन्ति तादृशाः एव व्यवहाराः, आचाराः च अस्माकम् आवश्यकाः।

यदि वयं सुखम्, आनन्दं च सर्वेभ्यः चिन्तयामः तर्हि अस्माकं स्वभावः दिनानुदिनम् उत्तमः भवति। अन्येभ्यः च सुखदः भवति। अस्माकं स्वभावेन सर्वे प्रसन्नाः तिष्ठन्ति। वयं सर्वदा प्रसन्नाः भवामः।

अतः अद्य आरभ्य वयं सर्वे प्रसन्नतायाः, आनन्दस्य च आदानप्रदानाय सदैव प्रयत्नशीलाः भवामः। सर्वत्र, सर्वदा च एतादृशरूपेण आनन्द-मयवातावरणनिर्माणाय वयं प्रयत्नं कुर्मः। आनन्द-मयजीवनार्थम् एतादृशः श्रेष्ठः उपायः अस्माभिः आश्रयणीयः।

— सम्पादकः

# अनुक्रमणिका



## लेखाः


- सदा सम्मान्याः कृषकाः........... 7
- राष्ट्रियः पशुः .................. 17
- अतीव सुन्दरं ग्रामजीवनम् ....... 43
- अन्ताराष्ट्रियः योगदिवसः ........ 45


## कथां पठाम


- अमूल्यनिधिः .................. 2
- मूढः सेवकः .................... 4
- वर्तमाने भवतु जीवनम् .......... 6
- बुद्धस्य उपदेशः ............... 19
- सदा सम्मान्या प्रकृतिः ......... 21
- चतुरः वृद्धः ................... 22
- सहनायाः परिणामः ............. 23
- बालकस्य शौर्यम् .............. 25
- विद्या एव श्रेष्ठा ................ 26
- जीवनपरिवर्तनम् ............... 29
- भाग्यं तु दैवाधीनम् ............. 31
- मूढः श्रृगालः ................... 32
- बुद्धिमान् शिष्यः ............... 33
- परोपकारः ..................... 34
- बुद्धिमान् वानरः ............... 35
- प्रामाणिक काष्ठिकः ............ 39
- अनुकरणशीलः लोकः ............ 40
- बुद्धिमती चटका ................ 41
- कीलोत्पाटी वानरः .............. 46
- चिन्तनं विना कार्यं न करणीयम् ... 47


## एहि हसाम


- चित्रकर्त्री धर्मपत्नी............... 13
- करदीपं समागताः मशकाः ....... 48


## गीतं गायाम


- नय तव बालमिमम् .............. 18


## क्रीडां करवाम


- शब्दक्रीडा ...................... 3
- वर्णान् पूरय..................
- चित्रं वदति....................


## पूर्वजानां सुचरितं, सुविज्ञानं च


- श्रीरामकृष्णपरमहंसः ............ 14
- रामप्रसादबिस्मिल्लः ............ 20
- राज्ञी दुर्गावती ................. 37
- भास्कराचार्यः .................. 44


## भारतीयलोकव्यवहारं पश्याम


- अक्षय–तृतीया .................. 8
- श्रीकृष्णजन्माष्टमी ............... 27


## सरलसंस्कृतं भाषामहै


- विद्यालये वार्तालापः............. 11
- पदपरिचयः..................... 12
- वाग्व्यवहारः .................... 16
- दिनचर्या–विवरणम् .............. 5

## सुभाषितम् ................ 9

## प्रश्नोत्तरी ................ 9

## सूक्तिः ................ 9



# अमूल्यनिधिः

कश्चन वृद्धः आसीत्। तस्य पञ्च पुत्राः आसन्। ते सर्वे अपि अत्यन्तम् अलसाः आसन्। तेषु कश्चित् अपि कार्यं न करोति स्म। वृद्धः बहुवारं सर्वान् बोधितवान् परन्तु ते सर्वदा उपेक्षां कुर्वन्ति स्म।

वृद्धस्य मरणकालः आगतः। तदा सः सर्वान् पुत्रान् उक्तवान् –"पुत्राः ! मम कृषिक्षेत्रे कुत्रापि अमूल्यनिधिः अस्ति। भवन्तः सर्वे कृषिक्षेत्रं खनन्तु। तम् अमूल्यनिधिं प्राप्तुवन्तु" इति। तदनन्तरं वृद्धः दिवङ्गतः।

वृद्धस्य मरणानन्तरं पुत्राः कृषिक्षेत्रं गतवन्तः। कृषिक्षेत्रे सर्वत्र खननं कृतवन्तः। सर्वत्र अन्वेषणं कृतवन्तः। परन्तु अमूल्यनिधिः तु न प्राप्तः एव। अनन्तरं ते सर्वे पुत्राः चिन्तितवन्तः यत् वयं कृषिक्षेत्रस्य खननं तु कृतवन्तः एव। इदानीं वयं कर्षणम् अपि कुर्मः। तदनन्तरं ते कृषिक्षेत्रस्य कर्षणं कृतवन्तः। बीजानां च वपनं कृतवन्तः।

कतिपयानां दिनानाम् अनन्तरम् एव सस्यानि प्रवृद्धानि। अनन्तरकाले धान्यम् अपि

अधिकं प्राप्तवन्तः।

तेषां धान्यानां विक्रयणं कृतवन्तः। तेन धनस्य अपि सम्पादनं कृतवन्तः। अनन्तरं ते सर्वे अपि पुत्राः पितुः वृद्धस्य कथनस्य अभिप्रायं ज्ञातवन्तः।

**आशयः** – यथोचितरूपेण कार्यकरणम् एव अमूल्यनिधिः भवति।

**शब्दार्थः** – बोधितवान् – समझाया, उक्तवान् – बोला, खनन्तु – खुदाई कीजिए, गतवन्तः – गये, कृतवन्तः – किये, चिन्तितवन्तः – सोचे/चिन्तन किये, वपनम् – बीज बोना, सस्यानि – फसल, प्रवृद्धानि – बढ़ गये, विक्रयणम् – बेचना, ज्ञातवन्तः – जान गये।

■ **मैत्रेयी**
सप्तमी कक्ष्या,
रोहिणी, देहली

# शब्दक्रीडा

**उपरिष्टात् अधः**

– जलस्य पर्यायः।
– आकाशे उड्डयते।
– पृथिव्याः विपरीतः।
– देवाः पिबन्ति।
– युद्धं करोति।

**वामतः दक्षिणम्**

– यया लिख्यते सा।
– वाराणस्याः अपरं नाम।
– फलस्य राजा।
– रामस्य जन्मभूमिः।
– पक्षिराजः कः ?

| अ | यो | ध्या | | | | |
|---|---|---|---|---|---|---|
| मृ | द्धा | | | | | |
| त | | आ | म्र | म् | | |
| म् | | का | शी | ले | ख | नी |
| | | शः | | | गः | र |
| | | | | | | म् |
| ग | रु | ड़ः | | | | |

■ **मोहितकुमारः**
मैनपुरी, उत्तरप्रदेशः



# मूढः सेवकः

कश्चन महाराजः आसीत्। तस्य महाराजस्य अत्यन्तं प्रियः कश्चन वानरः सेवकः आसीत्। सः वानरः महाराजस्य विशाले राजप्रासादे सर्वत्र गमनागमनं करोति स्म।

एकदा महाराजः निद्रां करोति स्म। तस्मिन् समये वानरः तत्र आगतः। सः महाराजस्य समीपं गत्वा हस्तव्यजनेन वीजनम् आरब्धवान्।

तदा एव महाराजस्य नासिकायां काचित् मक्षिका उपविष्टा। वानरः हस्तव्यजनेन तां मक्षिकां दूरीकर्तुं बहुवारं प्रयत्नं कृतवान्। तथापि सा मक्षिका पुनः पुनः

आगत्य महाराजस्य नासिकायाम् उपविशति स्म। तदा सः चपलः वानरः कुपितः जातः। सः खड्गं स्वीकृतवान्। अत्यन्तं तीक्ष्णेन खड्गेन सः वानरः मक्षिकायाः उपरि प्रहारं कृतवान्। मक्षिका तु उड्डीय ततः गता। परन्तु खड्गप्रहारेण महाराजः मृतः अभवत्।

**आशयः** — विवेकवान् सेवकः एव अपेक्षितः।

**शब्दार्थः** — राजप्रासादे — राजभवन में, हस्तव्यजनेन — हाथ वाले पंखे से, वीजनम् — हवा करना, आरब्धवान् — आरम्भ किया, नासिकायाम् — नाक पर, काचित् मक्षिका — कोई मक्खी, उपविष्टा — बैठ गयी, दूरीकर्तुम् — दूर करने के लिए, आगत्य — आकर, चपलः — चंचल, खड्गम् — तलवार को, स्वीकृतवान् — लिया, तीक्ष्णेन — तेज धार वाले (तलवार) से, उड्डीय — उड़कर।

**सुश्रीः राजेश्वरी**
वैशाली, गाजियाबादम्
उत्तरप्रदेशः

## सुभाषितम्

**मृगाः मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरगैः।**
**मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु सख्यम्।।**

**भावार्थः** — *मृग मृगों के साथ चलते हैं, गाएँ गायों के साथ चलती हैं, घोड़े घोड़ों के साथ चलते हैं, मूर्ख मूर्खों के साथ चलते हैं तथा विद्वान् विद्वानों के साथ चलते हैं। समानशील और व्यसन वालों में मित्रता होती है।*

## दिनचर्या-विवरणम्

**सुधीरः उत्तमः बालकः अस्ति। सः रङ्गपुरे वसति। सः प्रतिदिनं प्रभाते उत्तिष्ठति। स्नानं करोति। तदन्तरम् सः पठति। यथासमयं विद्यालयं गच्छति। सः कञ्चुकम्, ऊरुकम्, पादत्राणं च धरति। तस्य एकः अग्रजः अस्ति। तस्य नाम धर्मेन्द्रः। सः यन्त्रशालां गच्छति। तत्र सः कार्यं करोति। सायङ्काले द्वौ अपि भ्रातरौ गृहम् आगच्छतः। भोजनं कुरुतः। सुखेन शयनं कुरुतः। उभौ अपि भ्रातरौ गृहे प्रेम्णा वसतः।**



# वर्तमाने भवतु जीवनम्

कश्चन धनिकः आसीत्। सः अत्यधिकः चतुरः आसीत्। सः सर्वदा धनसङ्ग्रहविषये एव चितयन्ति स्म। तदर्थं सः अन्यान्यदेशेषु व्यापारार्थं यात्रां करोति स्म। कदाचित् व्यापारं समाप्य स्वदेशं प्रति प्रत्यागच्छति स्म। प्रत्यागमनसमये सः मार्गे एव अग्रिमायाः यात्रायाः विषये चिन्तयति स्म। तदनन्तरं सः पूर्वतनव्यापारस्य हानिलाभविषये विचारमग्नः जातः। एवमेव सः सर्वदा धनविनिमयादिषु चिन्तने रतः भवति स्म। कदाचित् अन्यदेशात् व्यापारं कृत्वा समुद्रमार्गेण नौकाद्वयेन धनादिकम् आनयति स्म। तदा अकस्मात् एव महता वेगेन वायोः प्रवाहः आरब्धः। दोलायमाना आसीत्। तदानीं सः धनिकः चिन्तयति यत् मम अर्जितं सर्वम् अपि धनं समुद्रे निमग्नं भविष्यति। तस्य अतीव भीतिः जाता। "भविष्यति काले तु अहं निर्धनः एव भविष्यामि, भिक्षाटनं च करणीयं भविष्यति" इत्येवं सर्वं चिन्ताक्रान्तः सः स्वस्य रक्षणम् अपि विस्मृतवान्। समुद्रजले च सः निगम्नः जातः। चाणक्यनीतौ विषयेऽस्मिन् उक्तं वर्तते –

**गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत्।**
**वर्तमानेन कालेन वर्तयन्ति विचक्षणाः।।**

**आशयः** – केवलं भूतं, भविष्यं च न चिन्तनीयम् अपितु वर्तमानपरिस्थितेः अनुगुणं व्यवहारः करणीयः।

**शब्दार्थः** – प्रत्यागच्छति स्म – लौट रहा था, रतः – संलग्न, महता वेगेन – महान् वेग से, दोलायमाना – हिलती–डुलती (नौका), निमग्नः – डूब गया, भीतिः – भय, भिक्षाटनम् – भीख माँगना, चिन्ताक्रान्तः – चिन्ता से युक्त, विस्मृतवान् – भूल गया, वर्तयन्ति – व्यवहार करते हैं, विचक्षणाः – बुद्धिमान्।

**पङ्कजपाण्डेयः**
रोहिणी
नई–दिल्ली



# सदा सम्मान्याः कृषकाः

कृषकाः प्रतिदिनं प्रातःकाले जागरणं कुर्वन्ति। वृषभान् नीत्वा ते कृषिक्षेत्रं गच्छन्ति। ते तत्र क्षेत्राणि कर्षन्ति। कृष्टेषु क्षेत्रेषु बीजं वपति। बीजेभ्यः अङ्कुराः जायन्ते। अङ्कुरेभ्यः सस्यानि जायन्ते। सस्यैः एव सम्पूर्णः देशः धान्यवान्, धनवान् च भवति। भारते ग्रामजनानां मुख्यकर्म कृषिकर्म भवति। ग्रामेषु कृषकाः कठोरं परिश्रमं कुर्वन्ति। ते ग्रीष्मकाले प्रतप्ते दिने अपि कृषिकार्ये संलग्नाः भवन्ति। वृष्टिकाले, शीतकाले चापि तथैव आचरन्ति। ते स्वस्य सुखं त्यक्त्वा देशस्य कृते दुःखं सहन्ते। यदि ते एवं कार्यं न करिष्यन्ति तर्हि अस्माकं देशः धान्येन, धनेन च पूर्णः न भविष्यति। कृषिकर्म अत्यन्तं श्रेष्ठं कर्म अस्ति। सम्पूर्णः देशः कृषकाणां ऋणी वर्तते। अतएव ते कृषकाः सर्वदा सम्माननीयाः सन्ति।

**शब्दार्थः** — वृषभान् - बैल को, नीत्वा - लेकर, कर्षन्ति - जोतते हैं, कृष्टेषु, क्षेत्रेषु - जोते हुए खेत में, वपन्ति - बोते हैं, प्रतप्ते दिने - तपते हुए दिन में, त्यक्त्वा - छोड़कर, अस्माकम् - हमारा, सर्वदा - हमेशा, लिये; संहारार्थम् - मारने के लिये; कोऽपि - कोई भी (पुं); एतादृशम् - ऐसा ( नपुं )।

■ **धीरजमैठाणी**
मेरठम्, उत्तरप्रदेशः



# अक्षय-तृतीया

भारते धर्म-जाति-भाषा-क्षेत्र-अनुसारं सांस्कृतिक-विविधता अस्ति। प्रत्येकं धर्मे, क्षेत्रे वा मुख्यानि पर्वाणि प्रचलितानि सन्ति। एतेषां पर्वणाम् आधारेण एव तस्य धर्मस्य, तस्याः संस्कृतेः च ज्ञानं भवति। रक्षाबन्धनम्, नवरात्रिः, दीपावली, होलिकोत्सवः चेत्यादीनि विशिष्टपर्वाणि उदाहरण- रूपेण स्वीकुर्मः। परञ्च एतानि मुख्यानि पर्वाणि विहाय अन्यानि अपि विशेषदिनानि तिथयश्च भवन्ति। प्रत्येकं मासे यत् किञ्चित् व्रतं, पर्व वा भवति। इत्थमेव वैशाखमासस्य शुक्लपक्षस्य तृतीयायां तिथौ ''अक्षयतृतीया'' पर्व आयाति। समग्रे भारतवर्षे जनाः धनधान्यसमृद्ध्यर्थम् अक्षयतृतीया–पर्व आचरन्ति। लोके इयम् अपि प्रथा अस्ति यत् अस्मिन् दिने यस्य वस्तुनः क्रयणं भवति तस्य सुदीर्घकालं यावत् समृद्धिः भवति। अतः अस्मिन् पावने दिवसे जनाः सुवर्ण–रजतादिधातुनिर्मित–वस्तूनां क्रयणं कुर्वन्ति। अस्मिन् पर्वणि भक्ताः लक्ष्मीमातुः पूजां कुर्वन्ति। अस्मिन् दिने ये केऽपि उपवासं दानं च कुर्वन्ति ते अत्यधिकं पुण्यं प्राप्नुवन्ति। तत् पुण्यं कदापि नष्टं न भवति। ''न क्षयः इति अक्षयः'' अर्थात् तस्य नाशः न भवति। अस्मिन् दिने जनाः यत्

व्रताचरणं, पूजादिकं च कुर्वन्ति। तस्य पुण्यरूपं यत् फलं भवति तत् कदापि न नश्यति इति जनविश्वासः।

अक्षयतृतीयायां तिथौ एव भगवतः विष्णोः षष्ठावतारः परशुरामावतारः सञ्जातः। अतः एव केचन जनाः अक्षयतृतीयापर्वणः दिवसे एव परशुरामजयन्तीम् अपि आचरन्ति।

अक्षयतृतीयायाः विषये विभिन्नकथाः प्रचलिताः सन्ति। शास्त्रानुसारं भगवान् श्रीकृष्णः बाल्यकालस्य मित्राय सुदाम्ने भौतिकसमृद्ध्यै आशीः प्रदत्तवान्।

तथा च शिवपुराणनुसारेण अक्षयतृतीयायाः दिने भगवान् शिवः कुबेरं धनस्वामिरूपेण नियुक्तवान्।

महाभारतानुसारम् अस्मिन् एव दिवसे वने भगवान् सूर्यनारायणः पञ्चपाण्डवेषु युधिष्ठिरस्य अज्ञातवाससमये "अक्षयपात्रम्" नामकम् एकं पात्रं प्रदत्तवान्। यदा कदापि यावन्तः वा जनाः भवन्ति तेषां

भोजनस्य आवश्यकता–पूरणाय एतत् पात्रं समर्थम् आसीत्। यावत् पर्यन्तं द्रौपदी न खादति स्म तावत् पर्यन्तं भोजनस्य न्यूनता न भवति स्म। एकदा सा सर्वान् भोजयति। अन्ते स्वयम् अपि खादति। तत्क्षणे एव दुर्वासा–ऋषिः तत्र आगच्छति। तस्य भोजनव्यवस्थार्थं पाण्डवाः द्रौपदीम् आदिशन्ति। तदा द्रौपदी चिन्ताग्रस्ता भवति यतः अक्षयपात्रे भोजनं समाप्तं जातम्। सा श्रीकृष्णं साहायातार्थं प्रार्थयते। श्रीकृष्णः तत्क्षणम् आगच्छति। अक्षयपात्रं पश्यति। तत्र अन्नस्य एकं कणं प्राप्नोति। तत् प्रेमपूर्वकं खादति। अक्षयपात्रं द्रौपद्यै प्रत्यर्पयति। तस्यै आशीः ददाति, गच्छति च। श्रीकृष्णस्य कृपया तत्पात्रं पुनः अक्षयभोजनं ददाति। तदा सा दुर्वासा–ऋषिं भोजयति। सः भोजनेन सन्तुष्टः भवति। सर्वेभ्यः आशीः ददाति, गच्छति च।

इत्थम् पर्वणां, व्रतानां वा प्रयोजनं मानवकल्याणम् एव अस्ति। पर्वदिवसेषु अनुष्ठानेन मानवस्य उत्थानं भवति, सुखसमृद्धेश्च वर्धनम् अपि भवति। इत्थम् अक्षयतृतीयादिवसम् आश्रित्य विभिन्नाः कथाः लोकाचाराश्च विद्यमानाः सन्ति। एतेषां पर्वणां समाचरणेन जनाः आध्यात्मिक–आनन्दं प्राप्नुवन्ति।

**अनिलकुमारद्विवेदी**
(शोधच्छात्रः) संस्कृतविद्यापीठम्, नवदेहली

**शब्दार्थः** – विहाय – छोड़कर, प्रथा – परम्परा, सुदाम्ने – सुदामा के लिए, आयाति – आता है, समग्रे – सम्पूर्णः लोके – संसार में, सञ्जातः – हुआ, इत्थम् – इस तरह, प्रदत्तवान् – दिया, तत्क्षणे – उसी समय, अन्नस्य – चावल का, कणम् – दाना, प्रत्यर्पयति – लौटाता है, यावन्तः – जितने, यावत् पर्यन्तम् – जब तक, तावत् पर्यन्तम् – तब तक, भोजयति – खिलाती है, आदिशति – आदेश।

## सूक्तिः

**स सुहृद् व्यसने यः स्यात्।**

**मित्र वही जो समय पर काम आये।**

A FRIEND IN NEED IS A FRIEND INDEED.

# प्रश्नोत्तरी

अत्र प्रतिमासं दश प्रश्नाः भवन्ति। प्रत्येकं प्रश्नस्य चत्वारः विकल्पाः उत्तररूपेण भवन्ति। तेषु कस्यचन एकस्य शुद्धस्य उत्तरस्य चयनं कुर्वन्तु। सर्वाणि उत्तराणि एतस्याः पत्रिकायाः अन्तः प्रदत्तानि सन्ति। आदौ स्वयम् एव प्रश्नस्य शुद्धम् उत्तरं चिन्तयन्तु। अनन्तरम् उत्तरं शुद्धम् अथवा अशुद्धम् इति उत्तरावल्यां पश्यन्तु। तत्पश्चात् मेलयन्तु च।

**1. वैदिकं राष्ट्रगीतं "आब्रह्मन् ब्राह्मणो....." इति कस्मिन् वेदे अस्ति ?**

अ) ऋग्वेदे  इ) यजुर्वेदे
उ) सामवेदे  ऋ) अथर्ववेदे

**2. यजुर्वेदस्य उपवेदः कः ?**

अ) धनुर्वेदः  इ) अथर्वेदः
उ) गन्धर्ववेदः  ऋ) आयुर्वेदः

**3. अष्टाध्यायीग्रन्थे कति सूत्राणि सन्ति ?**

अ) 3915  इ) 3978
उ) 5115  ऋ) 3000

**4. संस्कृतव्याकरणे कति लिङ्गानि भवन्ति ?**

अ) त्रीणि  इ) द्वे
उ) पञ्च  ऋ) चत्वारि

**5. "सत्यमेव जयते" कस्मिन् उपनिषदि अस्ति ?**

अ) ईशावास्योपनिषदि
इ) मुण्डकोपनिषदि
उ) कठोपनिषदि
ऋ) ईशावास्योपनिषदि

**6. सर्वप्रथमं गुरूत्वाकर्षण–सिद्धान्तस्य परिकल्पनां कः दत्तवान् ?**

अ) भास्कराचार्यः  इ) नागार्जुनः
उ) सुश्रुतः  ऋ) वराहमीहिरः

**7. विमानस्य आविष्करणं सर्वप्रथमं कुत्र अभवत् ?**

अ) अमेरिकायाम्  इ) फ्रांसदेशे
उ) भारते  ऋ) चीनदेशे

**8. योगस्य कति अङ्गानि भवन्ति ?**

अ) पञ्च  इ) अष्ट
उ) सप्त  ऋ) चत्वारि

**9. प्रतिसप्ताहं शनिरविवासरयोः डी.डी. न्यूज (दूरदर्शन चैनल) इत्यत्र कस्याः धारावाहिन्याः प्रसारणं भवति ?**

अ) मनोगतवार्ता  इ) संस्कृतवार्तावली
उ) आकाशवाणी  ऋ) रामायणम्

**10. भारतस्य प्रधानमन्त्री श्रीनरेन्द्र–मोदिमहोदयः "राष्ट्रिययुद्धस्मारकम्" (नेशनल वार ऑफ मेमोरियल) इति राष्ट्राय कदा समर्पितवान् ?**

अ) 5 मार्च 2019
इ) 15 फब्रवरी 2019
उ) 25 फब्रवरी 2019
ऋ) 26 जनवरी 2019

*{उत्तरं पृष्ठक्रमाङ्के त्रयोदशे (13) अस्ति}*

**चण्डीप्रसादभट्टः**
शृङ्गेरी, कर्णाटकम्



# विद्यालये वार्तालापः

| | | |
|---|---|---|
| उमा – | हरिः ऊँ पङ्कज !<br>भवान् ह्यः विद्यालये नासीत्। | – अरे ओ पङ्कज !<br>कल आप विद्यालय में नहीं थे। |
| ओमप्रकाशः – | अरे अहं वदामि।<br>एषः मम गृहे आसीत्। | – अरे मैं बताता हूँ।<br>यह मेरे घर में था। |
| उमा – | किमर्थम् ? | – क्यों ? |
| पङ्कजः – | भवती न स्मरति किम् ?<br>ह्यः अस्य जन्मदिवसः आसीत्। | – आपको याद नहीं है क्या ?<br>कल इसका जन्मदिन था। |
| ओमप्रकाशः – | अहं रुष्टः अस्मि।<br>भवती किमर्थं न आगतवती ? | – मैं गुस्सा हूँ।<br>आप क्यों नहीं आयीं ? |
| उमा – | क्षन्तव्या अहम्।<br>मम तु विस्मरणं जातम्। | – मुझे माफ करना।<br>मैं भूल गयी। |
| पङ्कजः – | चिन्ता मास्तु। परन्तु मित्रस्य<br>जन्मदिनं न विस्मर्तव्यम्। | – चिन्ता मत कीजिए। लेकिन मित्र का<br>जन्मदिन भूलना नहीं चाहिए। |

| | | |
|---|---|---|
| ओमप्रकाशः – | अस्तु। आगच्छतु।<br>किमपि मधुरं खादामः। | – ठीक है। आइए।<br>कुछ मीठा खाते हैं। |
| उमा – | अहं तु रसगोलकं खादिष्यामि। | – मैं तो रसगुल्ला खाऊँगा। |
| पङ्कजः – | अहम् अपि रसगोलकं<br>खादिष्यामि। | – मैं भी रसगुल्ला<br>खाऊँगा। |
| ओमप्रकाशः – | अस्तु। वयं सर्वेऽपि।<br>रसगोलकम् एवं खादिष्यामः। | – ठीक है। हम सभी लोग<br>रसगुल्ला ही खाएँगें। |
| उमा – | भवान् स्वस्य उपहारं<br>स्वीकरोतु। | – आप अपना उपहार<br>लीजिए। |
| ओमप्रकाशः – | उपहारः आवश्यकः किम् ? | – उपहार आवश्यक है क्या ? |
| उमा – | शुभाशयस्य प्रतीकरूपम् एतत्।<br>कृपया स्वीकरोतु। | – यह शुभाशय का प्रतीक है।<br>कृपया लीजिए। |
| ओमप्रकाशः – | धन्यवादः। | – धन्यवाद। |
| उमा – | स्वागतम्। | – स्वागत है। |

## पदपरिचयः

**(सम्बन्धवाचकशब्दाः)**

| | | | | | |
|---|---|---|---|---|---|
| जनकः | = | पिता | पत्नी | = | पत्नी |
| जननी | = | माता | स्नुषा | = | बहू |
| अग्रजः | = | बड़ा भाई | भ्रातृजा | = | भतीजी |
| अग्रजा | = | बड़ी बहन | भागिनेयः | = | भाँजा |
| पौत्रः | = | पोता | भागिनेयी | = | भाँजी |
| पौत्री | = | पोती | पितृस्वसा | = | बुआ |
| दौहित्रः | = | नाती | मातृस्वसा | = | मौसी |
| दौहित्री | = | नातिन | भ्रातृजाया | = | भाभी |
| भ्रातृजः | = | भतीजा | देवरः | = | देवर |
| पतिः | = | पति | स्वसुरः | = | ससुर |
| सहोदरः | = | भाई | श्वश्रूः | = | सास |
| सहोदरी | = | बहन | जमाताः | = | दमाद |

**विमलेशकुमारमिश्रः**
प्रतापगढम्, उत्तरप्रदेशः

**हास्यकणिका**

# चित्रकर्त्री धर्मपत्नी



( कस्मिंश्चित् गृहस्थाश्रमे धर्मपत्नी अङ्कन्या चित्रपुस्तिकायां किमपि कुर्वती भवति। तत् दृष्ट्वा पतिः पत्नी पृच्छति )

पतिः – प्रियतमे ! किं कुर्वती अस्ति ?

पत्नी – नहि पश्यति किम् ? तृणं खादतः अश्वस्य चित्रनिर्माणं कुर्वती अस्मि।

पतिः – तर्हि कुत्र स्तः तृणम् अश्वश्च ?

पत्नी – अधुना तु अश्वः तृणं खादित्वा शयितुम् अश्वशालां गतवान्। ( एतदनन्तरं पतिः पत्नीं पश्यन् एव अभवत् )।

■ **लक्ष्मीः**
काष्ठमण्डपम्

**उत्तराणि :** 1. इ) यजुर्वेदे, 2) अ) धनुर्वेदः, 3) इ) 3978, 4) अ) त्रीणि, 5) इ) मुण्डकोपनिषदि, 6) अ) भास्कराचार्यः, 7) उ) भारते, 8) इ) अष्ट, 9) इ) संस्कृतवार्तावली, 10) उ) 25 फब्रवरी 2019।




## प्रतिस्पन्दः

◆ "बालसंस्कृतम्" इति बालपत्रिका मह्यम् अतीव अरोचत। कथामाध्यमेन बालकान् नीतिं, भाषां, ज्ञानविज्ञानादिकं च बोधयितुम् इयम् अत्युपयुक्ता अस्ति।

– **श्रीमती लक्ष्मी शर्मा**, *मिशिगन अमेरिका*

◆ जगति कठिनसंस्कृतं सर्वत्र पौनः पुन्येन दृश्यते, किञ्च 'बालसंस्कृतम्' नाम्नी इयं पत्रिका संस्कृतभाषायाः सरलातिशयं रूपं प्रदर्शयति। बालाः संस्कृतं, तस्य महिमानं च विज्ञाय गौरवान्विताः भविष्यति इति मे मतम्। कार्यमिदं प्रशस्ततमम्।

– **श्री रामचन्द्ररेग्मी**, *दिल्ली*

◆ "बालसंस्कृतम्" इति पत्रिका मया दृष्टा। अत्र बालविकासाय उत्तमाः कथाः सन्ति। अद्यत्वे एतादृशी पत्रिका नास्ति। उत्तरप्रदेश–संस्कृतसंस्थानेन अनया पत्रिकया भारतीयसंस्कृतेः विशेषतया सहजं ज्ञानं सम्पादितमस्ति। एषः प्रयत्नः श्लाघ्यः प्रशस्यः च।

– **श्री हेमन्त कौशिकः**
चण्डीगढ़म्



# श्रीरामकृष्णपरमहंसः

श्रीरामकृष्णपरमहंसस्य जन्म पश्चिमबङ्ग–राज्यस्य हुगलिमण्डले कामारपुकुरनामके ग्रामे 1836 खीस्ताब्दे फेब्रुवरीमासस्य अष्टादशे दिनाङ्के जातम्। एतस्य माता चन्द्रमणिदेवी, पिता च खुदीरामः। शिवलिङ्गतः दिव्यज्योतिः तस्याः गर्भे प्रविष्टा इति चन्द्रामणिदेवी पश्यति। तस्य पिता खुदीरामः तीर्थभ्रमणसमये गङ्गायां गदाधरविष्णोः दर्शनं प्राप्नोति। अतः सः नवजातस्य शिशोः नामकरणं 'गदाधर' इति करोति। शैशवकाले अस्य नाम 'गदाइ' इति आसीत्। सः ग्रामजनेषु अतिप्रियः आसीत्। विद्यालयीयशिक्षाव्यवस्था एतस्मै नैव रोचते स्म, अतः सः विद्यालयगमने उत्सुकः न भवति। चित्राङ्कने तथा मृत्तिकामूर्तिनिर्माणे तस्य मनः रमते स्म। गाने, वाद्यवादने, यात्राभिनये, धर्मोपासनायां सः निपुणः

आसीत्। अत्यल्पे वयसि एव तीर्थयात्रीणां, संन्यासिनां, पुराणकथाकाराणां च संसर्गेण पुराण–रामायण–महाभारतादिषु निपुणताम् अर्जितवान् आसीत् गदाधरः। तस्य मातृभाषा बाङ्गला आसीत्। तस्याः अक्षरज्ञानमात्रम् आसीत्। संस्कृतभाषायाः अवगमने पूर्णरूपेण समर्थः आसीत्। किन्तु संस्कृतसम्भाषणे सः असमर्थः आसीत्। बाल्ये वयसि सः संन्यासिनां, तीर्थयात्रिणां च सेवाकार्यं करोति स्म। तेषां धार्मिकतर्कवितर्कान् ध्यानेन श्रृणोति स्म गदाधरः। तस्य पिता 1843 तमे वर्षे दिवङ्गतः। समग्रकुटुम्बस्य परिपालनस्य दायित्वम् तस्य अग्रजस्य रामकुमारस्य उपरि आपतितम्। एतत्–घटनाद्वारा गदाधरस्य मनसि गभीरप्रभावः जातः। आध्यात्मिक–जीवन–यापनस्य इच्छा इतोऽपि दृढा जाता। धार्मिककार्येषु, गृहकार्येषु च गदाधरः अधिकसमयं व्ययं करोति स्म। धार्मिकग्रन्थानां पारायणसमये सः प्रायशः आत्ममग्नः भवति स्म।

किशोरावस्थायां तस्य कुटुम्बम् आर्थिक–सङ्कटापन्नः जातः। तस्य अग्रजः रामकुमारः कोलकातानगरे संस्कृतपाठशालायाः आरम्भं करोति। अतिरिक्ते समये सः पौरोहित्यकर्म करोति स्म। 1852 तमे वर्षे अग्रजस्य सहायतार्थं गदाधरः कोलकातानगरं गच्छति।

अनन्तरे काले रामकृष्णस्य आध्यात्मिकजीवने तन्मयता अधिका जाता। कालीदेवीं मातृरूपेण विश्वजननीरूपेण च सः पूजयति, प्रत्यक्षीकरोति च। तस्य विश्वासेन, पूजाप्रभावेण च पाषाणप्रतिमा अपि अन्नग्रहणं करोति स्म।

सर्वधर्मस्य भिन्नानां मार्गानां परिपालनं, साधनां च आचरति। तस्य कथनम् एवम् आसीत् यत् ''यावन्ति मतानि तावन्ति पन्थानः'' अर्थात् भागवतः प्राप्तिः एव अस्माकं लक्ष्यम्। तत्प्राप्त्यर्थं मार्गः कोऽपि वा भवेत्। रात्रिकाले निकटस्थं वनं गत्वा सः ध्यानं करोति स्म। केचन वदन्ति स्म यत् ''एषः उन्मत्तः जातः' इति। अपरे तु चिन्तयति-स्म यत् ''सः ईश्वरप्रेम्णि आकुलः जातः'' इति।

दक्षिणेश्वरकालीक्षेत्रे गदाधरः अर्चकः जातः। तस्य माता लोकमुखात् स्वपुत्रस्य विषये श्रृणोति। सा तं जन्मग्रामं नयति, तस्य विवाहमपि कारयति।

शारदामणिनामिका बालिका एव तस्य धर्मपत्नी जाता। तस्य गुरोः नाम तोतापुरी आसीत्। तस्य गुरुः तस्य नामकरणं ''रामकृष्णः'' इति कृतवान् इति जनश्रुतिः अस्ति। अपरं मतम् एतत् अस्ति यत् दक्षिणेश्वरकालीक्षेत्रे तस्य नाम 'रामकृष्णः' इत्येव प्रचलितम् आसीत्। न केवलं पश्चिमबङ्गे अपितु आभारतम्, आविश्वं च तस्य उपदेशाः अतीव प्रसिद्धाः सन्ति। 1886 तमे वर्षे रामकृष्णस्य देहावसानं जातम्। तदनन्तरं तस्य शिष्याः तस्य चिन्तनम् अग्रे सारयन्ति। रामकृष्णस्य शिष्येषु स्वामी विवेकानन्दः विशिष्टः। तदा सः एव सर्वेषां नेतृत्वं करोति स्म। विवेकानन्दः ''रामकृष्णमिशन्' इति एकस्याः धार्मिकसंस्थायाः निर्माणं कृतवान् या च अधुना आविश्वं व्याप्ता अस्ति। तस्य अनुयायिनः तं ''परमहंसः'' इति उपाधिना विभूषितवन्तः। अतः अधुना तस्य नाम ''रामकृष्ण–परमहंसः'' इत्येव प्रचलितम् अस्ति।

**नेपालदासः**
हुगली, पश्चिमबङ्गः

**शब्दार्थः** — प्रविष्टा - प्रवेश हुई, प्राप्नोति - प्राप्त करता है, एतस्मै - इसे, रोचते-स्म - अच्छा लगता था, रमते स्म - मन लगता था, अत्यल्पे वयसि - बहुत कम उम्र में, अवगमने - समझने में, श्रृणोति स्म - सुनता था, नैव - नहीं, अपतितम् - आ गया, मनसि - मन पर, इतोऽपि - और भी, आचरति - आचरण करता है, कोऽपि - कोई भी, केचन - कुछ लोग, अपरे - दूसरे, कृतवान् - किया, आभारतम् - पूरे भारत में, आविश्वम् - पूरे संसार में, सारयन्ति - बढ़ाते हैं, उपाधिना - उपाधि से।

# वाग्व्यवहारः

| | | |
|---|---|---|
| छात्रः – | नमस्ते। अहं छात्रः। भवान् कः ? | – नमस्ते। मैं छात्र हूँ। आप कौन हैं? |
| सेवकः – | अहं सेवकः। | – मैं सेवक हूँ। |
| | भवान् किम् इच्छति ? | – आप क्या चाहते हैं। |
| छात्रः – | अत्र संस्कृतशिक्षकः कः अस्ति ? | – यहाँ संस्कृत शिक्षक कौन हैं ? |
| सेवकः– | अत्र संस्कृत शिक्षकः न<br>अपितु संस्कृतशिक्षिका अस्ति। | – यहाँ संस्कृत शिक्षक नहीं हैं।<br>अपितु संस्कृतशिक्षिका हैं। |
| छात्रः – | सा कुत्र अस्ति ?<br>अहं मेलितुम् इच्छामि। | – वह कहाँ हैं?<br>मैं मिलना चाहता हूँ। |
| सेवकः – | सा प्रकोष्ठस्य अन्तः अस्ति। | – वह कमरे के अन्दर हैं। |
| | भवान् प्रकोष्ठं गच्छतु। | आप कमरे में जाइए। |
| छात्रः – | (अन्तः गत्वा शिक्षिकाम् उद्दिश्य) | – (अन्दर जाकर शिक्षिका को सम्बोधित करके) |
| | मान्ये ! भवती संस्कृत शिक्षिका किम्? | मैडम ! आप संस्कृत शिक्षिका हैं क्या ? |
| शिक्षिका – | आम्! अहं संस्कृतशिक्षिका अस्मि। | – हाँ मैं संस्कृत शिक्षिका हूँ। |
| | किम् आवश्यकम् ? | क्या चाहिए ? |
| छात्रः – | आगामि–कक्ष्यायाम् अहं संस्कृतं पठिष्यामि। | – अगली कक्षा में मैं संस्कृत पढ़ूँगा। |
| शिक्षिका – | अवश्यम्। उत्तमः विचारः।<br>एतत् आवेदनपत्रं स्वीकरोतु।<br>एतत् प्रपूर्य पुनः मह्यं ददातु। | – अवश्य, अच्छा विचार है।<br>यह आवेदन–पत्र लिजिए।<br>इसे भरकर पुनः मुझे दीजिए। |
| छात्रः – | अस्तु। धन्यवादः। | – ठीक है। धन्यवाद। |
| शिक्षिका – | स्वागतम्। | –स्वागत। |

■ **विमलेशकुमारमिश्रः**
प्रतापगढम्, उत्तरप्रदेशः



# राष्ट्रियः पशुः

अस्माकं भारतदेशस्य राष्ट्रियः पशुः व्याघ्रः अस्ति। एतस्य वर्णः पीतः, श्वेतः च भवति। एतस्य शरीरे कृष्णवर्णीयाः रेखाः भवन्ति। व्याघ्रः सदैव सावधानं तिष्ठति। यदि सङ्कटम् आयाति तर्हि सः झटिति एव तं परिचिनोति। अतीव पराक्रमी भवति व्याघ्रः। देशस्य उत्तरक्षेत्रं, पूर्वक्षेत्रं च विहाय वनेषु वयं व्याघ्रान् द्रष्टुं शक्नुमः। प्रतिवेशि–देशेषु अपि व्याघ्रः प्राप्यते। विश्वे उपलब्धायाः व्याघ्रसङ्ख्यायाः प्रतिशतं सप्ततिमिताः व्याघ्राः भारते सन्ति। यथा तीव्रगतिकः व्याघ्रः लक्ष्यप्राप्तये तत्परः भवति तथा वयम् अपि राष्ट्रसेवायै तत्पराः भवेम।

**शब्दार्थः** — अस्माकम् - हमारा, व्याघ्रः - बाघ, वर्णः - रंग, पीतः - पीला, श्वेतः - सफेद, कृष्णवर्णीयः - काले रंग वाला, झटिति - जल्दी, परिचिनोति - परखता है, विहाय - छोड़कर, द्रष्टुं शक्नुमः - देख सकते हैं, प्रतिवेशिदेशेषु - पड़ोसी देशों में, प्राप्यते - मिलता है, तीव्रगतिकः - अधिक वेग वाला, लक्ष्यप्राप्यते - लक्ष्य प्राप्ति के लिए।

■ **गौरीशः**
गुरुग्रामः, हरियाणा

# नय तव बालमिमम्

नय तव बालमिमम्। यशोदे
चेष्टितमस्य सोढुमशक्यम्।। नय तव।।
विशति स मन्दं विजनं गेहम्।
चलति विडालसमम्। कृष्णः।।
दधिनवनीतं घृतमवशेषम्
हरति कलशपूर्णं चोरः।। नय तव।।
जलमानेतुं कूपगतानाम्
चरणं वारयति। स्त्रीणाम्।
स्नानपराणां कुलयुवतीनाम्
वसनं चोरयति। कृष्णः।। नय तव।।
गोव्रजमध्ये नटनमनोज्ञम्
वेणुं वादयति। मृदुलम्।।
वत्सं कृत्वा रज्जुविहीनम्
क्षीरं पाययति। धेनोः।। नय तव।।



■ **गु० गणपय्यहोळ्ळः**
(शिशुसंस्कृतम् - गीतपुस्तकात् - साभारम्)



# बुद्धस्य उपदेशः

कश्चन राजकुमारः। सः बहु उद्दण्डः आसीत्। सः सर्वदा कटुवचनं वदति अतः जनाः खिन्नाः भवन्ति स्म। महाराजः विविधैः प्रकारैः उपदेशं कृतवान्। परन्तु सः बोधनेन सफलः न जातः। अन्ततः सः राजा बुद्धस्य समीपं गत्वा सर्वं विषयं निवेदयति। बुद्धः उक्तवान् – ''चिन्ता मास्तु, तं मम समीपं प्रेषयतु'' इति। राजकुमारः बुद्धस्य दर्शनार्थं गतवान् बुद्धः उक्तवान्– ''मम पुरतः पत्राणि सन्ति। तानि भवान् भक्षयतु'' इति। राजकुमारः खादितवान्। तानि पत्राणि तिक्तानि आसन्। अतः कोपेन सः वृक्षम् एव छिन्नवान्। बुद्धः पृष्टवान् – ''भवान् किमर्थम् एवं कृतवान् ?'' राजकुमारः उक्तवान् – ''एषः विषवृक्षः न वर्धनीयः अतः एवं कृतवान्।'' महात्मा मन्दं हसन् बोधितवान् – भवान् अपि जनानां निन्दां करोति। अतः अग्रे भवन्तम् अपि जनाः मारयितुम् आगच्छेयुः। तदा भवतः का गतिः भवेत् ? एतद्विषये भवान् चिन्तितवान् किम् ?'' इति। एतद् वचनं श्रुत्वा राजकुमारः स्वस्य दोषं ज्ञातवान्। बुद्धं क्षमां याचितवान्। तदनन्तरं जनानां सेवार्थं जीवनं यापितवान् च।

**आशयः** – विशिष्टस्य उपदेशस्य अपेक्षया यथोचितरूपेण प्रबोधनम् एव श्रेष्ठं भवति।

**श्रीमती भाग्यवती**
बरेली, उत्तरप्रदेशः

**शब्दार्थः** गत्वा - जाकर, निवेदयति - निवेदन करता है, उक्तवान् - कहा, गतवान् - गया, पत्राणि - पत्ते, भक्षयतु - खाइए, खादितवान् - खाया, तिक्तानि - तीता (कड़वा), छिन्नवान् - काट दिया, पृष्टवान् - पूछा, वर्धनीयः - बढ़ना चाहिए, कृतवान् - किया, बोधितवान् - समझाया, मारयितुम् - मारने के लिए, चिन्तितवान् - सोचा, श्रुत्वा - सुनकर, ज्ञातवान् - जाना, याचितवान् - माँगा, यापितवान् - बिताया।



# रामप्रसादबिस्मिल्लः

गोरखपुरस्य कारागारम्।'काकोरी' प्रकरणसन्दर्भे कश्चित् बन्धने स्थापितः। न्यायालये वादः प्रवृत्तः। अन्ते न्यायाधीशः उक्तवान् – ''शूलारोपेण दण्डनीयः एषः'' इति। एतां वार्तां श्रुत्वा सर्वे खिन्नाः अभवन्। किन्तु सः बन्दी चिन्तितवान् – ''मातुः पादतले स्वस्य समर्पणस्य कश्चन उत्तमः अवसरः प्राप्तः अस्ति।'' अतः सः सन्तुष्टः जातः। पुत्रस्य मरणदण्डनवार्तां ज्ञात्वा माता धावन्ती आगता। मातरं दृष्ट्वा सः बहु रुदितवान्। तदा माता उक्तवती – ''भवान् धीरः, राष्ट्रभक्तः च इति प्रसिद्धिः अस्ति। परन्तु मरणभये न ग्रस्तः दृश्यते इदानीम्। एवं चेत् एतादृशः मार्गः भवता किमर्थम् आश्रितः। तदा सः उक्तवान् – ''अहं मरणात् भीतः न, सिंहस्य उदरे सिंहः एवः उत्पन्नः भवति न तु शृगालः।'' एतेन दण्डेन मातृवात्सल्यात् अहं वञ्चितः भविष्यामि अम्ब।' शूलारोपणदिने सः प्रातः उत्थाय भगवद्गीतां पठितवान्। योगासनं, पूजां च कृतवान्। एतत्सर्वं दृष्ट्वा कश्चित् अधिकारी पृष्टवान् – ''भवान् किमर्थं एतत्सर्वं करोति ?'' इति। ''वयं भारतीयाः पुनर्जन्मनि विश्वासं कुर्मः। एतस्य जन्मनः फलम् अग्रिमजन्मनि प्राप्स्यामः। कष्टकरं कार्यं कर्तुं दृढं शरीरम् आवश्यकम् एव। अतः योगासनं करोमि'' इति उक्तवान् सः युवकः। एषः अप्रतिमः राष्ट्रभक्तः एव रामप्रसादः बिस्मिलः। देशार्थम् आत्मनः समर्पणं कृत्वा सः सर्वेभ्यः प्ररणादायकः जातः।

**धनञ्जयमिश्रः**
प्रयागराजः, उत्तरप्रदेशः

**शब्दार्थः** – न्यायाधीशः - जज, उक्तवान् - कहा, शूलारोपेण - भाले से गोदकर, श्रुत्वा - सुनकर, चिन्तितवान् - सोचा, धावन्ती - दौड़ती हुई, दृष्ट्वा - देखकर, रुदितवान् - रोया, इदानीम् - अभी शृगालः - सियार, उत्थाय - उठकर, पृष्टवान् - पूछा, किमर्थम् - किसलिए, पुनर्जन्मनि - पुनः जन्म में, प्राप्स्यामः - पाएंगा, अप्रतिमः - अद्भुत, सर्वेभ्यः - सभी के लिए।



# सदा सम्मान्या प्रकृतिः

एकदा गौतमबुद्धः एकं वृक्षं नमस्करोति स्म। तदा तस्य शिष्यस्य कुतूहलं जातम्। सः शिष्यं पृष्टवान् – "भगवन् ! भवान् एतं वृक्षं किमर्थं नमस्कृतवान् ? भवतः नमस्कारस्य प्रत्युत्तरम् एषः वृक्षः तु न ददाति। भवान् तु महापुरुषः। अस्य किं प्रयोजनम् ?" इति।

सस्मितम् सन् महात्मा बुद्धः उक्तवान्– "वत्स! एतादृशं चिन्तनं समुचितं नास्ति। यथा प्रत्येकं व्यक्तेः काचित् भाषा भवति तथा समग्रप्रकृतीनां वृक्षाणां चापि पृथक् काचित् भाषा भवति। अतः स्वसम्मानस्य प्रत्युत्तररूपेण एते अपि सम्मानं, कृतज्ञतां च प्रकटयन्ति। एतादृशवृक्षाणाम् अधः एव उपविश्य अहं तपः आचरितवान्। सर्वदा अपि वृक्षाः आतपात् मां रक्षितवन्तः। शीतलतां च प्रदत्तवन्तः। अतः कृतज्ञतायाः प्रकटनं मम परमं कर्त्तव्यम् अस्ति।" इति।

वस्तुतः प्रत्येकं व्यक्तिः प्रकृतिं प्रति कृतज्ञा स्यात्। यतः प्रकृतिः व्यक्तिभ्यः सुन्दरं, सरलं, सुखप्रदं च जीवनं प्रददाति।

तदनन्तरं बुद्धस्य शिष्यः अपि अनुभवं कृतवान् यत् वृक्षः भावपूर्णः अस्ति। तस्य वृक्षस्य पत्राणि, पुष्पाणि, शाखाः च अद्भुतां शान्तिं प्रददाति स्म।

**अनिलकुमारगौतमः**
शोधच्छात्रः, लखनऊ-विश्वविद्यालयः

**शब्दार्थः** – पृष्टवान् - पूछा, किमर्थम् - किसलिए, नमस्कृतवान् - नमस्कार किया, उक्तवान् - कहा, एतादृशम् - ऐसे, प्रकटयन्ति - प्रकट करते हैं, तपः - तपस्या, आचरितवान् - आचरण किया, आतपात् - धूप से, रक्षितवन्तः - रक्षा किए, प्रदत्तवन्तः - दिए, प्रददाति - देता है, कृतवान् - किया।



# चतुरः वृद्धः

कश्चन वृद्धः। एकदा तस्य बुभुक्षा जाता। समीपे एव एकः आम्रवृक्षः आसीत्। सः वृद्धः आम्रवृक्षस्य समीपम् गतवान्। वृक्षे बहूनि फलानि आसन्। सः चिन्तितवान् – "अहं तु वृद्धः। मम शरीरे शक्तिः नास्ति। वृक्षः उन्नतः अस्ति। कथम् उपरि गच्छामि ? कथं फलानि प्राप्नोमि ?" इति वृक्षस्य उपरि वानराः आसन्। अनन्तरं वृद्धः एकम् उपायं कृतवान्। सः पाषाणखण्डान् उन्नीतवान्। वानराणाम् उपरि शिलाखण्डान् क्षिप्तवान्। तेन कारणेन वानराः कुपिताः अभवन्। अतः ते वानराः फलानि क्षिप्तवन्तः। वृद्धः तानि फलानि स्वीकृतवान्। अनन्तरं सन्तोषेण खादितवान्।

**आशयः** – बुद्ध्या, उपायेन च सर्वं कार्यं सिद्धं भवति।

**सुरभिः झाः**
जमदेशपुरम्, झारखण्डम्

**शब्दार्थः** – बुभुक्षा - भूख, गतवान् - गया, आसन् - थे, चिन्तितवान् - सोचा, उन्नतः - ऊँचा, उपरि - ऊपर, प्राप्नोमि - पाऊँ, कृतवान् - किया, पाषाणखण्डान् - छोटे पत्थरों को, उन्नीतवान् - उठाया, शिलाखण्डान् - पत्थरों को, क्षिप्तवान् - फेंका, कुपिताः - क्रोधित, अभवन् - हुए, क्षिप्तवन्तः - फेंके, स्वीकृतवान् - लिया, सन्तोषेण - सन्तोष से, खादितवान् - खाया, बुद्ध्या - बुद्धि से।



# सहनायाः परिणामः

कश्चित् ग्रामः आसीत्। तत्र बहवः ग्रामीणाः वसन्ति स्म। ग्रामीणाः ग्रामे एकं विद्यालयम् इच्छन्ति स्म। परन्तु तेषां समीपे विद्यालयनिर्माणाय अपेक्षितं धनं नासीत् एव। अतः ते सर्वे सम्मिल्य ग्रामस्य धनिकस्य समीपं गच्छन्ति। सः धनिकः अत्यन्तं लोभी, उन्मत्तः च आसीत्। यदा ग्रामीणाः विद्यालयनिर्माणार्थं धनं याचितवन्तः तदा धनिकः तेभ्यः क्रुध्यति। सः धनिकः धनं न ददाति एव। कुद्धः सः तेषामुपरि शिलाखण्डान् क्षिपति।

ग्रामीणेषु कश्चन जनः पाषाणखण्डं स्वीकरोति। तदनन्तरं वदति च – ''भोः मित्राणि! विद्यालयस्य शिलान्यासकर्मनिमित्तं धनिकस्य हस्तकमलाभ्याम् एकः पाषाणखण्डः प्राप्तः। वयं धन्याः।'' इति।

किञ्चित्कालान्तरं विद्यालयः निर्मितः। तस्य समुद्घाटनकार्यक्रमे विद्यालयजनाः तम् एव धनिकं मुख्यातिथिरूपेण आमन्त्रितवन्तः। तत्र ते तस्य सत्कारसमये वदन्ति – ''एतेन महोदयेन प्रदत्तशिलाखण्डेन एव अस्य विद्यालयस्य शिलान्यासकर्म जातम् आसीत्'' इति। एतत् श्रुत्वा सर्वे जनाः करताडनपूर्वकं धन्यवादं कृतवन्तः। जनानाम् एतादृशीं भावनां ज्ञात्वा धनिकः स्वस्य

पूर्वकृतकर्मणि अत्यन्तं लज्जाम् अनुभूतवान् तदनन्तरं च विद्यालयनिमित्तं यथेष्टं धनं दत्तवान्। स्वस्य च अवशिष्टं जीवनं परोपकाराय एव समर्पयति। अनन्तरकाले तस्य सन्तति: अपि कथयति स्म यत् "एष: विद्यालय: मम पित्रा प्रदत्तेन शिलाखण्डेन निर्मित: आसीत्।" एता: सन्ततय: अपि समाजसेवां कृत्वा जीवन्ति।

**आशय:** – समीचीनं परिणामं प्राप्तुं सहना अपेक्षिता।

**स्वामी बालकृष्णाचार्य**
भरतपुरम्–१६, नेपालम्

**शब्दार्थ:** – कश्चित् - कोई, आसीत् - था, बहव: - अनेक, वसन्ति स्म - रहते थे, इच्छन्ति स्म - चाहते थे, सम्मिल्य - मिलकर, उन्मत: - पागल, याचितवन्त: - माँगे, क्रुध्यति - क्रोध करता है, ददाति स्म - देता था, शिलाखण्डान् - पत्थरों को, क्षिपति- फेंकता है, स्वीकरोति - लेता है, वदति- बोलता है, हस्तकमलाभ्याम् - दोनों हाथरूपी कमलों से, प्राप्त: - प्राप्त हुआ, किञ्चित्कालानन्तरम् - कुछ समय के बाद, निर्मित: - निर्माण हुआ, आमन्त्रितवन्त: - आमन्त्रित किया, जातम् आसीत् - हुआ था, श्रुत्वा - सुनकर, कृतवन्त: - किए, ज्ञात्वा - जानकर, पूर्वकृतकर्मणि - पहले किये गये कार्य पर, अनुभूतवान् - अनुभव किया, यथेष्टम् - पर्याप्त, समर्पयति - समर्पित करता है।

## अक्षरैः संस्कृतशब्दनिर्माणं करोतु–

यथा– घ → घट:, ज → जाल:







## सूक्तिः

**सङ्गच्छध्वं संवदध्वं सं**
**वो मनांसि जानताम्।।**

एक साथ चलें, एक साथ बोलें, एक दूसरे के मन को समझें।

## सङ्ख्या

एक-त: विंशति-पर्यन्तम्
(1 से लेकर 20 तक)

| | | | | |
|---|---|---|---|---|
| 1 एकम् | 2 द्वे | 3 त्रीणि | 4 चत्वारि | 5 पञ्च |
| 6 षड् | 7 सप्त | 8 अष्ट | 9 नव | 10 दश |
| 11 एकादश | 12 द्वादश | 13 त्रयोदश | 14 चतुर्दश | 15 पञ्चदश |
| 16 षोडश | 17 सप्तदश | 18 अष्टादश | 19 नवदश | 20 विंशति: |



# बालकस्य शौर्यम्

औरङ्गजेबमहाराजस्य महती सभा प्रचलति स्म। सभायां सः स्वेन पालितस्य सिंहस्य शौर्यस्य वर्णनं कृतवान्। तदा तम् उद्दिश्य जसवन्तः उक्तवान्– "महाराज! मम समीपे एतस्य अपेक्षया अपि बलिष्ठः सिंहः अस्ति।" एतस्य वाक्यं श्रुत्वा औरङ्गजेबः अतीव क्षुब्धः। तस्य मुखं रक्तवर्णं जातम्। सः एवम् उक्तवान् – "जसवन्त! यदि तथा अस्ति तर्हि भवतः सिंहेन सह मम सिंहस्य युद्धं भवतु। भवतः सिंहः पराजितः भविष्यति चेत् भवतः शिरच्छेदं करिष्यामि" इति। जसवन्तसिंहस्य किञ्चिदपि भयं नासीत्। अनन्तरम् अग्रिमे एव दिने 'केम्पुकोटे' नामके क्रीडाङ्गणे सर्वे समयेन आगताः। महाराज औरङ्गजेबः पृष्टवान् – "जसवन्त! भवतः सिंहः कुत्र अस्ति? " जसवन्तः दशवर्षीयं बालकं पृथिवीसिंहं दर्शयित्वा उक्तवान्– युद्धार्थम् आज्ञां ददातु।" सेवकः राज्ञानुसारं सिंह पञ्जरस्य अन्तः प्रेषितवान्। बालकः अपि गतवान्। सर्वे आश्चर्यान्विताः। तस्य बालकस्य तेजः दृष्ट्वा सिंहः भीतः भूत्वा पृष्ठतः गतवान्। पृथिवीसिंहः आरम्भे खड्गं स्वीकृतवान्। पिता आज्ञापितवान् – "खड्गं विना युद्धं करोतु। यतः प्रतिस्पर्धी निरायुधः।" बालकः खड्गं क्षिप्तवान्। सिंहं युद्धे मारितवान् च। पिता आनन्देन तम् आलिङ्गितवान्। जनाः बालकस्य प्रशंसायां करताडनं कृतवन्तः।

■ **शचीकान्तः-त्रिपाठी**
महरौली, दिल्ली

**शब्दार्थः** महती – बड़ी, सभायाम् – सभा में, स्वेन – अपने द्वारा, किञ्चिदपि – थोड़े भी, दर्शयित्वा – दिखाकर पञ्जरस्य – पिंजरे का, आश्चर्यान्विताः – आश्चर्यचकित, दृष्ट्वा – देखकर, खड्गम् – तलवार को, आज्ञापितवान् – आज्ञा दी, निरायुधः – बिना शस्त्रवाला, क्षिप्तवान् – फेंका, अलिङ्गितवान् – आलिंगन किया, प्रशंसायाम् – प्रशंसा में, करताडनम् – ताली।



# विद्या एव श्रेष्ठा

किञ्चन नगरम् आसीत् । तत्र रामः, सोमः चेति मित्रद्वयं वसति स्म । रामः विद्याम् इच्छति स्म । सोमः धनम् इच्छति स्म । एकदा मित्रद्वयम् अपि विदेशम् अगच्छत् । तत्र रामः विद्याभ्यासम् अकरोत् । सोमः च धनार्जनम् अकरोत् । अनेकानि वर्षाणि अतीतानि । मित्रद्वयम् अपि स्वनगरं प्रति प्रत्यागच्छति स्म । मार्गे चोराः आसन् । ते सोमस्य धनम् अहरन् । तदनन्तरं मित्रद्वयं नगरम् अगच्छत् । नगरे महाराजः आसीत् । सः मित्रद्वयस्य विषये अजानात् । रामः विद्यासम्पन्नः आसीत् अतः तं स्वस्य मन्त्रिपदनिमित्तम् आह्वयत् । रामः मन्त्री अभवत् । सोमः विद्याविहीनः । अतः सः जीवन-यापनार्थं रामस्य सेवकः अभवत् ।

**सविता**
साकेतम्, नवदेहली

**आशयः** — जीवने विद्यायाः महत्त्वम् अधिकम् अतः विद्यायाः अर्जनं श्रेष्ठं भवति ।

**शब्दार्थः** — वसति स्म - रहता था, इच्छति - चाहता था, अगच्छत् - गया, अकरोत् - किया, अतीतानि - बीत गए, प्रत्यागच्छति स्म - लौट रहा था, आसन् - थे, अहरन् - चुरा लिए, अजानात् - जान गया, आह्वयत् - बुलाया, अभवत् - हुआ, जीवनयापनार्थम् - जीवन बिताने के लिए ।

# श्रीकृष्णजन्माष्टमी

भगवान् श्रीकृष्णः भगवतः नारायणस्य अष्टमः अवतारः। यः चन्द्रवंशी अस्ति अतः तस्मिन् चन्द्रमसि इव षोडश कलाः (श्रीसम्पदा, भूसम्पदा, कीर्तिसम्पदा, वाणीसम्मोहनता, लीला, कान्तिः, विद्या, विमला, उत्कर्षिणी – शक्तिः, नीरक्षीर-विवेकता, कर्मण्यता, योगशक्तिः, विनयशीलता, सत्यता, आधिपत्यता, अनुग्रहक्षमता च) विद्यमानाः सन्ति। अतः एव सः पूर्णावतारः, पूर्णपुरुषोत्तमः च कथ्यते। ''भगवतः अवतारः किमर्थं भवति? इत्यस्मिन् विषये गीतायां श्लोकद्वयम् अस्ति –

**यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत।**
**अभ्युथानमधर्मस्य, तदात्मानं सृजाम्यहम्।।**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापपनार्थाय सम्भवामि युगे युगे।।**

एतयोः श्लोकयोः तात्पर्यम् एवमस्ति यत् ''यदा धर्मस्य हानिः भवति, यदा च अधर्मस्य आधिक्यं भवति तदा अहं स्वस्य सर्जनं करोमि। सज्जनानां

रक्षणार्थं, दुर्जनानां विनाशार्थं धर्मस्य स्थापनार्थं च अहं प्रत्येकस्मिन् युगे अवतरामि।'' इति भगवान् कृष्णः स्वयं वदति।

श्रीकृष्णस्य माता देवकी, पिता च वसुदेवः। एतस्य जन्म मथुरायां कंसस्य कारावासगृहे भाद्रपदमासे, कृष्णे पक्षे, अष्टम्यां तिथौ, रोहिण्यां नक्षत्रे च रात्रौ द्वादश–वादने जातम् आसीत्। कंसः तस्य मातुलः आसीत्। सः श्रीकृष्णात् भीतः अतः तं मारयितुम् इच्छति स्म।

परन्तु जन्मनः अनन्तरं वसुदेवः तस्मात् कंसात् रक्षायै तं नन्दग्रामे नन्दमहाराजस्य गृहं प्रति प्रापितवान्। तत्र यशोदा, नन्दमहाराजः च तस्य पालनं, पोषणं च कृतवन्तौ। अतः श्रीकृष्णः देवकीनन्दनः, वासुदेवः, यशोदावत्सलः, नन्द-गोपालः इत्यादिभिः नामभिः प्रसिद्धः।

भारते, नेपाले, विदेशेषु चापि यत्र हिन्दवः सन्ति तत्र ते एतस्य पर्वणः सम्यक् आचरणं कुर्वन्ति। मन्दिरेषु कीर्तनं भवति। वीथिषु दधि-पूरित-कुम्भ-त्रोटन-कार्यक्रमः भवति। एतादृशाः बहवः सांस्कृतिकार्यक्रमाः भवन्ति।

भक्ताः आदिवसं व्रतं कुर्वन्ति। रात्रौ द्वादशवादने श्रीबालकृष्णस्य वास्तविक-जन्मसमये आरार्तिक्यं कुर्वन्ति। प्रसादं च आस्वादयन्ति। इत्थं भारतीयपर्वसु जन्माष्टमी विशिष्टं पर्व अस्ति।

**नूतनविष्णुरेग्मी**
सन्तकबीरनगरम्

**शब्दार्थः** — भगवतः - भगवान् का, तस्मिन् चन्द्रमसि इव - उस चन्द्रमा की तरह, कथ्यते - कहा जाता है, किमर्थम् - क्यों, इत्यस्मिन् विषये - इस विषय में, गीतायाम् - गीता में, रक्षणार्थम् - रक्षा के लिए, विनाशार्थम् - विनाश के लिए, स्थापनार्थम् - स्थापना के लिए, प्रत्येकस्मिन् युगे - प्रत्येक युग में, अवतरामि - अवतार लेता हूँ, मथुरायाम् - मथुरा में, मातुलः - मामा, भीतः - भयभीत, रक्षायै - रक्षा के लिए, प्रापितवान् - पहुँचाया, कृतवन्तौ - किए, नामभिः - नामों से, पर्वणः - पर्व का, वीर्थिषु - गलियों में, दधि-पूरित-कुम्भत्रोटन-कार्यक्रमः - दही से भराहुआ घड़े को तोड़ने का कार्यक्रम, आरार्तिक्यम्- आरति, आस्वादयन्ति - चखते हैं, इत्थम् - इस प्रकार।

## विष्णुः

**वसुदेवसुतं देवं कंसचाणूरमर्दनम् । देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ।।**

***भावार्थः*** *— सर्वप्रकारकाणां विघ्नानां शान्तिनिमित्तम् शुभ्रवस्त्रधारिणम्, चन्द्रवर्णसदृशं प्रकाशमानम्, चतुर्भुजम् ( यस्य चत्वारः हस्ताः सन्ति तम् ), प्रसन्नवदनम् ( यस्य मुखं सर्वदा प्रसन्नं भवति तम ) च ध्यायेत् (ध्यानं करणीयम् )।*

*( सभी प्रकार के विघ्नों के शान्ति के लिए शुभ्र वस्त्र धारण करने वाले, चन्द्रमा के समान प्रकाशयुक्त रहने वाले, चार भुजाओं वाले, और सर्वदा प्रसन्न मुख वाले (विष्णु) का ध्यान करना चाहिए।)*



# जीवनपरिवर्तनम्

कश्चन ग्रामः। तत्र कश्चन भिक्षुकः आसीत्। यद्यपि स्वस्थः, समीचीनः च युवकः तथापि सः भिक्षाटनं करोति स्म। ये मार्गे गच्छन्ति स्म तान् प्रति एषः वदति स्म – ''भिक्षां ददातु। दरिद्राय दानं करोतु। पुण्यं भविष्यति। भगवान् शतगुणितं भवद्भ्यः पुण्यं दास्यति।'' इति। सर्वे जनाः भिक्षुकाय भिक्षां ददति स्म।

एकदा मार्गे कश्चन धनिकः आगतवान्। सः भिक्षुकः चिन्तितवान् – अहो, मम भाग्यम्। धनिकस्य आगमनेन मम लाभः भविष्यति। अहं प्रभूतं धनं प्राप्स्यामि।'' इति।

भिक्षुकः धनिकम् उक्तवान् – ''श्रीमन्। अहम् अतीव दरिद्रः। कृपया मह्यं धनं ददातु।'' इति।

धनिकः तं पृष्टवान् – ''भवान् किम् इच्छति ?''

भिक्षुकः उक्तवान् – ''अहं प्रभूतं धनम् इच्छामि।''

तदा धनिकः उक्तवान् – ''अहं भवते सहस्रं रूप्यकाणि ददामि। भवान् मह्यं पादद्वयं ददातु।'' इति।

भिक्षुकः उक्तवान् – ''अहं भवते कथं पादद्वयं ददामि।''

पादद्वयं विना कथम् अहं चलिष्यामि ?'' इति।

पुनः धनिकः उक्तवान् – ''अहं भवते द्विसहस्रं रूप्यकाणि ददामि। भवान् मह्यं हस्तद्वयं ददातु।'' इति

तदा भिक्षुकः। पृष्टवान् – ''यदि अहं भवते हस्तद्वयं दास्यामि तर्हि भिक्षां कथं स्वीकरिष्यामि।'' इति

पुनः धनिकः उक्तवान् – ''अस्तु, अहं पञ्च-सहस्रं रूप्यकाणि दास्यामि। भवान् मह्यं स्वस्य नेत्रद्वयं ददातु।'' इति।

तदा भिक्षुकः उक्तवान् — ''नेत्रद्वयं विना अहं कथं जीवनयापनं करिष्यामि।'' इति

एतने प्रकारेण धनिकः सहस्राधिकरूप्यकैः अन्यानि शरीराङ्गानि याचितवान्। यदा भिक्षुकः सर्वेषाम् अङ्गानां दानं न अङ्गीकृतवान् तदा धनिकः तं बोधितवान् — ''पश्य मित्रा! भवतः समीपे एव सहस्राधिकमूल्यानां वस्तूनि सन्ति। तथापि भवान् आत्मानं दरिद्रं मन्यते? भवान् पङ्गु, दुर्बलः, अन्धः वा नास्ति। किमर्थं भिक्षाटनं करोति ? भवान् स्वावलम्बी किमर्थं न भवति ? मानवजीवनं सौभाग्येन प्राप्यते। अस्य सफलतार्थं प्रयत्नं करोतु। भवान् इतः गच्छतु भवतः शुभं भवतु।'' इति

तदनन्तरं भिक्षुकः नूतनतया जीवनम् आरब्धवान्।

**दीपकपाण्डेयः**
कटवारियासरायम्, नवदेहली

**आशयः** — परिश्रमपूर्वकम् एव धनार्जनं करणीयम्। सफलता च प्राप्तव्या।

**शब्दार्थः** — कश्चन - कोई, करोति स्म - करता था, गच्छन्ति स्म - जाते थे, वदति स्म - बोलता था, भवद्भ्यः - आप लोगों के लिए, ददति स्म - देते थे, आगतवान् - आया, प्रभूतम् - अधिक, प्राप्स्यामि - पाऊँगा, उक्तवान् - कहा, पृष्टवान् - पूछा, भवते - आपके लिए, भवान् - आप, ददातु - दीजिए, कथम् - कैसे, स्वीकरिष्यामि - लूँगा, याचितवान् - माँगा, अङ्गीकृतवान् - माना, पङ्गुः - लँगड़ा, किमर्थम् - क्यों, प्राप्यते - मिलता है, आरब्धवान् - आरम्भ किया।

## प्रहेलिका

**सीमन्तिनीषु का शान्ता? राजा कोऽभूत् गुणोत्तमः?**
**विदुषां का सदा वन्द्या? अत्रैवोक्तं, न बुध्यते।**

**भावार्थः** — स्त्रीषु का शान्ता अस्ति ? राजसु सर्वाधिकः गुणवान् कः आसीत् ? विद्वांसः ये सन्ति तेषां कृते सर्वदा का पूजनीया भवति ? उत्तरम् अस्यां प्रहेलिकायाम् एव अस्ति किन्तु न ज्ञायते।

*(स्त्रियों में सबसे शान्त कौन है ? राजाओं में सर्वाधिक गुणवान् कौन हैं ? विद्वानों के लिए सदा पूजनीय कौन हैं ? इसी पहेली में इसका उत्तर है परन्तु ज्ञात नहीं होता है।)*

**उत्तरम्** — प्रथम प्रश्नस्य प्रथमम् अक्षरम् अस्ति —'सी'। अन्तिमं च अक्षरम् अस्ति —'ता'। द्वयोः मेलनेन उत्तरं भवति —'सीता' द्वितीयप्रश्नस्य प्रथमम् अक्षरम् —'रा', अन्तिमं च अक्षरम् —'मः' तृतीय प्रश्नस्य प्रथमम् अक्षरं 'वि' अन्तिमं च अक्षरम् — 'द्या' अस्ति। सीता, रामः, विद्या च क्रमशः अस्याः प्रहेलिकायाः उत्तरम् अस्ति।



# भाग्यं तु दैवाधीनम्

कश्चन अहितुण्डिकः आसीत्। सः सर्पाणां ग्रहणं करोति स्म। प्रतिदिनं सर्पाणां प्रदर्शनं करोति स्म। तेन तस्य जीवनयापनं भवति स्म। एकस्मिन् दिने सः एकं सर्पम् आनयति। तं सर्पं सः पेटिकायां स्थापयति।

कदाचित् सः अहितुण्डिकः अन्यं ग्रामम् अगच्छत्। तेन सह तस्य पत्नी, पुत्राः चापि अगच्छन्। सर्पः तु पेटिकायां बद्धः एव आसीत्। पञ्चदिनानि अतीतानि। अहितुण्डिकः न आगचछत्। सर्पस्य आहारार्थं किमपि न आसीत्। सः पेटिकातः बहिः गमनाय बहुवारं प्रयत्नम् अकरोत्। सः बुभुक्षितः आसीत्। अतः तस्य शक्तिः क्षीणा जाता। तदर्थं सः बहुधा विफलः जातः।

कदाचित् पेटिकासमीपे एकः मूषकः आगच्छत्। सः पेटिकाम् अपश्यत्। ''पेटिकायां खादनार्थं अन्नानि सन्ति'' इति चिन्तयित्वा मूषकः अचिन्तयत् – ''पेटिकायां रन्ध्रं करोमि'' इति। तदनन्तरं सः पेटिकायां रन्ध्रम् अकरोत्। अन्तः च प्रवेशम् अकरोत्। मूषकः सर्पस्य मुखे गतः एव। सर्पः मूषकम् अखादत्। पुनः तेन रन्ध्रेण एव बहिः अगच्छत्। अहो! सर्पस्य सौभाग्यम्! मूषकस्य च दौर्भाग्यम्।

**पङ्कजशर्मा**
गाजियाबादम्, उत्तरप्रदेशः

**आशयः** – भाग्यं बलवत् भवति।

**शब्दार्थः** – अहितुण्डिकः - सपेरा, करोति स्म - करता था, भवति स्म - होता था, आनयति - लाता है, पेटिकायाम् - टोकड़ी में, एकस्मिन् दिन - एक दिन, अगच्छत् - गया, अगच्छन् - गए, बद्धः - बँधा हुआ, अतीतानि - बीत गए, आहारार्थम् - भोजन के लिए, किमपि - कुछ भी, अकरोत् - किया, बुभुक्षितः - भूखा, बहुधा - बहुत बार, अपश्यत् - देखा, चिन्तयित्वा - सोचकर, अचिन्त्यत् - सोचा, रन्ध्रम् - छेद, गतः - गया, अखादत् - खाया, तेन रन्ध्रेण - उस छेद से।



# मूढः श्रृगालः

कश्चन श्रृगालः आसीत्। एकदा सः भोजनार्थं वने भ्रमति स्म। एकत्र सः द्राक्षालतां दृष्टवान्। तस्यां लतायाम् अनेकानि द्राक्षाफलानि सन्ति। तानि पक्वानि आसन्। श्रृगालः चिन्तयति– ''अद्य द्राक्षाफलानि एव मम भोजनम्'' इति। द्राक्षाफलानि प्राप्तुं सः प्रयत्नं कृतवान्। बहुवारं सः उपरि उत्पतति। तथापि सः द्राक्षाफलानि न प्राप्तवान्। श्रृगालः पुनः पुनः उत्पतति। सः विफलः एव भवति।

श्रृगालः कुपितः भवति। सः द्राक्षाफलानि एव दूषितवान्। 'द्राक्षाफलानि आम्लानि सन्ति'' इति उक्तवान्। अनन्तरं सः स्वस्थानं गतवान्।

**सिम्पीमिश्रः**
खानपुरम्, नवदेहली

**आशयः** – स्वस्य लोपः अन्यस्य उपरि न आरोपणीयः।

**शब्दार्थः** – मूढः – मूर्ख, श्रृगालः – सियार, आसीत् – था, भ्रमति स्म – घूमता था, एकत्र – एक जगह, द्राक्षालता – अंगूर की लताएँ, दृष्टवान् – देखा, पक्वानि – पके हुए, आसन् थे, चिन्तयति – सोचता है, प्राप्तुम् – पाने के लिए, कृतवान् – किया, उपरि – उपर, उत्पतति – उछलता है, तथापि – फिर भी, प्राप्तवान् – पाया, विफलः – असफल, कुपितः – क्रोधित, दूषितवान् – दोष दिया, आम्लानि – खट्टे हैं, उक्तवान् – कहा, गतवान् – गया।



# बुद्धिमान् शिष्यः

किञ्चन नगरम् आसीत्। तस्मिन् नगरे कश्चन पण्डितः निवसति स्म। पण्डितसमीपं कश्चन शिष्यः आगतवान्। सः शिष्यः उक्तवान् – "गुरुवर! अहं भवतः समीपे विद्याभ्यासार्थम् आगतवान्।" इति।

पण्डितः शिष्यस्य बुद्धिपरीक्षणार्थं पृष्टवान्–

शिष्यः उक्तवान् – "गुरो ! देवः कुत्र नास्ति ? कृपया भवान् एव मां बोधयतु।" इति

सन्तुष्टः गुरुः उक्तवान् – "देवः सर्वत्र अस्ति। देवः सर्वव्यापी अस्ति। त्वं बुद्धिमान् असि। अतः विद्याभ्यार्थं मम समीपे वस।" इति।

**आदिश्रीः**
रोहिणी, देहली

**आशयः** – श्रद्धा अस्ति चेत् अवश्यं ज्ञानं प्राप्नोति।

**शब्दार्थः** – किञ्चन - कोई, आसीत् - था, तस्मिन् नगरे - उस नगर में, कश्चन - कोई, निवसति स्म - रहता था, आगतवान् - आया, उक्तवान् - बोला, भवतः - आपके, विद्याभ्यासार्थम् - विद्या के अभ्यास के लिए, बुद्धिपरीक्षणार्थम् - बुद्धि की परीक्षा के लिए, भवान् - आप, माम् - मुझको, बोधयतु - समझाए, असि - हो, वस - रहो



# परोपकारः

गङ्गातटे कश्चन साधुः वसति स्म। सः सर्वेषां प्राणिनां सदा उपकारं करोति स्म। यः अपकारं करोति तस्यापि उपकारं करोति स्म। सः प्रतिदिनं गङ्गानद्यां स्नानं करोति स्म। एकदा सः स्नानार्थं नदीं गतवान्। सः नदीप्रवाहे एकं वृश्चिकं दृष्टवान्। सः तं वृश्चिकं हस्तेन गृहीतवान्। गङ्गातटे च तं स्थापयितुं प्रयत्नं कृतवान्। किन्तु वृश्चिकः साधुपुरुषस्य हस्ते दशनं कृतवान्। यदा साधुः वृश्चिकं त्यक्त्वान्। तदा वृश्चिकः जले पतितः। पुनः साधुः हस्तेन गृहीत्वां तं गङ्गातटे स्थापयितुं प्रयत्नं कृतवान्। पुनः वृश्चिकः हस्ते दशनं कृतवान्। एतेन प्रकारेण साधुः वृश्चिकं बहुवारं गृहीतवान्। वृश्चिकः अपि पुनः पुनः दशनं कृतवान्।

गङ्गातटे कश्चन पुरुषः आसीत्। सः एतत्सर्वं पश्यति स्म। सः उक्तवान् – ''साधुमहाराज ! एषः वृश्चिकः दुष्टः, अतः पुनः पुनः दशति। भवान् किमर्थं तं पुनः पुनः हस्ते स्थापयति ? एतं वृश्चिकं त्यजतु।'' इति।

तदनन्तरं साधुः तं उक्तवान् – ''वृश्चिकः क्षुद्रः जन्तुः। दशनं तस्य स्वाभावः। सः स्वस्य स्वभावं न त्यजति। अहं तु मनुष्यः। अहं मम परोपकारस्वभावं कथं त्यजामि ?'' इति।

**आशयः** – वस्तुतस्तु यः अपकारं करोति तस्यापि उपकरं यः करोति सः एव साधुः भवति।

**पम्मीप्रभा**
भागलपुरम्, बिहारम्

**शब्दार्थः** – सर्वेषां प्राणिनाम् - सभी प्राणियों का, गङ्गानद्याम् - गङ्गा नदी में, स्नानार्थम् - स्नान करने के लिए, गतवान् - गया, वृश्चिकम् - बिच्छु को, दृष्टवान् - देखा, हस्तेन - हाथ से, गृहीतवान् - पकड़ा, स्थापयितुम् - रखने के लिए, दशनं कृतवान् - डंक किया, त्यक्त्वान् - छोड़ दिया, पश्यति स्म - देख रहा था, भवान् - आप, किमर्थम् - क्यों, त्यजतु - छोड़ दीजिए, उक्तवान् - कहा, कथम् – कैसे।



# बुद्धिमान् वानरः

कस्मिंश्चित् वने काचित् दीर्घा नदी आसीत्। नद्याः तीरे एकः जम्बूफल–वृक्षः अस्ति। वृक्षे एकः वानरः निवसति। नद्याम् एकः मकरः निवसति। वृक्षे बहूनि जम्बूफलानि सन्ति। वानरः तानि फलानि प्रतिदिनं खादति। एकदा कतिचन फलानि नद्यां पतन्ति। तानि फलानि मकरः खादति। फलानि बहूनि मधुराणि सन्ति। मकरः वानरं वदति – "भोः! फलानि बहु मधुराणि सन्ति। कानिचन फलानि अत्र क्षिपतु।" वानरः चिन्तयति यत् वृक्षे बहूनि फलानि सन्ति अतः कानिचन फलानि अहं क्षिपामि। प्रतिदिनं वानरः फलानि क्षिपति। मकरः च तानि फलानि खादति। एतेन प्रकारेण द्वयोः मैत्री जाता।

कस्मिंश्चित् दिने मकरः तानि फलानि गृहं प्रति नयति। गृहे सः पत्न्यै फलानि ददाति। पत्नी वदति – "फलानि अत्यन्तं मधुराणि सन्ति। भवान् एतानि फलानि कुतः प्राप्नोति ?" तदा मकरः वदति – "मम मित्रं वानरः प्रतिदिनम् एतादृशानि फलानि ददाति।"

एतत् श्रुत्वा तस्य पत्नी चिन्तयति यत् वानरः प्रतिदिनं मधुराणि फलानि खादति अतः तस्य हृदयम् अपि बहु मधुरं स्यात्। सा मकरं वदति – "अहम् एतानि फलानि न इच्छामि। अहं तु वानरस्य हृदयं खादितुम् इच्छामि।" तदनन्तरं

मकरः वदति यत् एतेन तु मम मित्रं मरिष्यति खलु। मम कृते तु वानरस्य हृदयम् आवश्यकम् एव इति। तस्य पत्नी पुनः दृढतया वदति।

अपरस्मिन् दिने यदा मकरः नदीतीरम् आगच्छति तदा वानरः पुनः फलानि क्षिपति। एतदनन्तरं मकरः वदति – "अद्य फलानि मास्तु। अद्य मम पत्नी भवतः कृते भोजनं कारयितुम् इच्छति।" एतत् श्रुत्वा वानरः वदति – "अस्तु, अहं भोजनार्थम् आगच्छामि परन्तु अहं तरणं न जानामि।" तदा मकरः वदति – "भवान् मम पृष्ठे उपविश्य गन्तुं शक्नोति।"

वानरः मकरस्य पृष्ठे उपविश्य गच्छति। मकरः यदा नद्याः मध्यभागं प्राप्नोति तदा सः वदति – "भोः वानर! मम पत्नी भोजनं न दास्यति। सा तु भवतः हृदयं खादितुम् इच्छति।"

तदा वानरः चिन्तयित्वा वदति – "रे मकर! मम हृदयं तु मम गृहे अस्ति। अतः भवान् आरम्भे मम गृहं चलतु। ततः हृदयं स्वीकृत्य आगच्छावः।"

मकरः चिन्तयति – "यदि हृदयं नास्ति तर्हि पत्नी पुनः कुपिता भविष्यति।" अतः सः हृदयम् आनेतुं पुनः नदीतीरं गच्छति। अनन्तरं वानरः कूर्दनं कृत्वा वृक्षम् आरोहति। अनन्तरं सः वदति – "भोः मकरः! भवान् एव मूर्खः। हृदयं कदापि गृहे भवति वा? हृदयं तु शरीरे भवति।"

**नीरजकुँवरः**
भागलपुरम्, बिहारम्

**आशयः** – बुद्ध्या उपायचिन्तनेन च महति कष्टे अपि यथोचितः मार्गः प्राप्यते।

**शब्दार्थः** – कस्मिंश्चित् वने - किसी वन में, काचित् दीर्घा नदी - कोई बड़ी नदी, तीरे - किनारे, जम्बुफलवृक्षः - जामुन फल वाला पेड़, वानरः - बन्दर, मकरः - मगरमच्छ, कतिचन - कुछ, क्षिपतु - फेंकां, कानिचन - कुछ, एतेन प्रकारेण - इस प्रकार, द्वयोः - दोनों की, नयति - ले जाता है, पत्न्यै - पत्नी के लिए, ददाति - देता है, कुतः - कहाँ से, प्राप्नोति - प्राप्त करते हैं, एतादृशानि फलानि - ऐसा फल, श्रुत्वा - सुनकर, चिन्तयति - सोचती है, बहु - बहुत, खादितुम् इच्छामि - खाना चाहती हूँ, मरिष्यति - मरेगा, दृढतया - दृढ़ता से, अपरस्मिन् दिने - दूसरे दिन, तदा - तब, अद्य - आज, अस्तु - ठीक है, पृष्ठे - पीठ पर, उपविश्य - बैठकर, गन्तुं शक्नोति - जा सकते हैं, दास्यति - देगा, चिन्तयित्वा - सोचकर, स्वीकृत्य - लेकर, आनेतुम् - लाने के लिए, आरोहति - चढ़ जाता है, कदापि– कभी।

**ग्राहको भव**

अयि मान्याः !

बालसंस्कृतम्-इत्यस्यै पत्रिकायै भवान्/भवती प्राथमिक-माध्यमिक-कक्ष्यायाः बालेभ्यः उपयोग-योग्यानि, पठनयोग्यानि, अवगमनयोग्यानि वां लेख-कथा-हास्यकणिका-प्रहेलिका-महापुरुषचरित-इत्यादीनि प्रेषयितुं शक्नोति। शुद्धतया, स्पष्टतया च श्वेतकर्गदे हस्तलिखितं, टङ्कितं वा balasamskritam @gmail.com इत्यत्र प्रेषयतु। पत्रिकायां प्रकाशिताय विषयाय मानधनरूपेण 250/– रूप्यकाणि उत्तरप्रदेशसंस्कृतसंस्थानेन दास्यते।



# राज्ञी दुर्गावती

प्राचीनकाले दक्षिणभरते गढ़मण्डलनामकं किञ्चन लघु राज्यम् आसीत्। तत् राज्यं महत् वैभवसम्पन्नम् आसीत्। तस्य राज्यस्य महाराजस्य दलपतिशाहस्य पत्नी राज्ञी दुर्गावती आसीत्। विवाहस्य किञ्चित्कालानन्तरमेव महाराजः दिवङ्गतः। राज्ञी दुर्गावती स्वपुत्रस्य नारायणस्य परिपालनेन सहैव कुशलतया, निर्विघ्नतया च बहूनि वर्षाणि राज्यस्य समग्रं प्रबन्धकार्यम् अकरोत्। तस्याः सेना अत्यन्तं सुसङ्घटिता आसीत्।

तदानीं भारते अकबरः आसीत्। तस्य साम्राज्यम् एतावत्पर्यन्तं सर्वत्र प्रसृतं नासीत्। अतः सः भारते समग्रमपि साम्राज्यं स्वाधीनं कर्तुं सर्वाः योजनाः करोति स्म। योजनायः साफल्यार्थं महत् धनम् अपेक्षितम् आसीत्। एतदर्थं सः गढमण्डल-राज्यं स्वाधीनं कर्तुम् इष्टवान्। तस्य आदेशानुसारं सेनापतिः आसफखानः महत्या सेनया सह प्रस्थितः। यवनानां महत्सैन्येन सह वीराङ्गना राज्ञी दुर्गावती महता पराक्रमेण युद्धम् अकरोत्। यवनसैनिकानाम् अकस्मात् आक्रमणेन् सा किञ्चिदपि न विचलिता। एतदर्थं सा स्वसैनिकान् सज्जान् अकरोत्।

सा सैनिकान् अवदत् – "अधुना अस्माकं मातृभूमिः सङ्कटग्रस्ता अस्ति। अस्याः रक्षणम् अस्माकं परमं दायित्वम् अस्ति। भवन्तः सर्वे प्राणान् पणीकृत्य युद्धाय सज्जाः भवन्तु। एकैकोऽपि

हिन्दुवीरः चिन्तयेत् यत् अहं शतं यवनान् मारयिष्यामि इति चिन्तयामः। यावत् पर्यन्तम् एकः अपि क्षत्रियसैनिकः जीवितः अस्ति तावत्पर्यन्तं गढमण्डले यवनानां साम्राज्यं भवतु न शक्नोति। शत्रूणाम् उपरि विजयं प्राप्नुमः।'' स्वदेशस्य कीर्तिम् अमरां कुर्मः'' इति।

एतादृशमनोभावनया राज्ञी दुर्गावती बहूनां यवनसैनिकानां प्रणान् अहरत्। चण्डी इव समराङ्गणे पराक्रमं प्रदर्शितवती। तस्याः पुत्रः नारायणः वीरगतिं प्राप्तवान्। तथापि पुत्रशोकस्य चिन्तां विहाय सततं युद्धम् अकरोत्। तस्याः वामनेत्रे बाणाघातः जातः। तदनन्तरमपि युद्धरता आसीत्। परन्तु विशालयवनसेनायाः समक्षं क्षत्रियवीराः बहुकालं युद्धं कर्तुं न शक्तवन्तः। अन्ते राज्ञी दुर्गावती ज्ञातवती यत् अधुना जयः न भविष्यति। तदा सा स्वखड्गेन आत्मानं हतवती। एवं सा रणगङ्गायाम् पवित्रां वीरगतिं प्राप्तवती।

**शब्दार्थः** कस्मिंश्चित् वने - किसी वन में, काचित् दीर्घा नदी - कोई बड़ी नदी, तीरे - किनारे, जम्बुफलवृक्षः - जामुन फल वाला पेड़, वानरः - बन्दर, मकरः - मगरमच्छ, कतिचन - कुछ, क्षिपतु - फेंकां, कानिचन - कुछ, एतेन प्रकारेण - इस प्रकार, द्वयोः - दोनों की, नयति - ले जाता है, पत्न्यै - पत्नी के लिए, ददाति - देता है। कुतः - कहाँ से, प्राप्नोति - प्राप्त करते हैं, एतादृशानि फलानि - ऐसा फल, श्रुत्वा - सुनकर, चिन्तयति - सोचती है, बहु - बहुत, खादितुम् इच्छामि - खाना चाहता हूँ, मरिष्यति - मरेगा, दृढतया - दृढ़ता से, अपरस्मिन् दिने - दूसरे दिन, तदा - तब, अद्य - आज, अस्तु - ठीक है, पृष्ठे - पीठ पर, उपविश्य - बैठकर, गन्तुं शक्नोति - जा सकते हैं, दास्यति - देगा, चिन्तयित्वा - सोचकर, स्वीकृत्य - लेकर, आनेतुम् - लाने के लिए, आरोहति - चढ़ जाता है, कदापि— कभी।

## विषाणु-(कोविड-19)-विघातिनी अस्मदीया स्वच्छतापरम्परा

भारतीयपरम्परायां स्वच्छतायाः अतीव महत्त्वं वर्तते। प्रातः जागरणाद् आरभ्य शयनपर्यन्तं वयं बहूनि कार्याणि कुर्मः। प्रातः जागरणान्तरं जलेन मुखस्य, दन्तानां च प्रक्षालनं सम्यक्तया कुर्मः। अल्पाहारात् पूर्वं हस्तयोः जलेन प्रक्षालनम् अनिवार्यम् एव। तथैव यदा-यदा किमपि पानीयम् उत् खादनीयं भवति तदा-तदा स्वच्छता अनिवार्या एव। गृहं प्रति कश्चित् अतिथिः आगच्छति चेत् अस्माकं परम्परानुसारं जलेन तस्य हस्तौ, पादौ च प्रक्षालनीयौ। श्रेष्ठेन जनेन समग्रशरीरस्य दिने त्रिवारं (प्रातःकाले, मध्याह्नकाले, साङ्काले च) स्वच्छता करणीया। 'त्रिकालसन्ध्या' (पूजा-ध्यान-मनन-चिन्तनादिकम्) इति अस्माकं संस्कृतौ प्रसिद्धम् अस्ति। स्वच्छतायाः अनन्तरमेव पूजा-ध्यान-भोजनादिकं करणीयम्। प्रतिदिनं स्वच्छं वस्त्रंधरणीयम्। परस्परम् अन्यस्य वस्त्र धरणम्, उच्छिष्टं पर्युषितं च भोजनं निषिद्धम् अस्ति। एतेन प्रकारेण, आचरणेन च स्वास्थघातकाः विषाणवः नष्टाः भवन्ति। स्वास्थरक्षणाय स्वच्छता अतीव अनिवार्या अस्ति। अतः अद्यत्वं वैद्याः कोविड-सङ्कमणकाले स्वच्छतासम्बद्ध-निर्देशं कुर्वन्ति।

**शब्दार्थः** — विद्यातिनी - मारनेवाली, अस्मदीया - हमारी, आरभ्य - से लेकर, शयनपर्यन्तम् - सोने तक, प्रक्षालनम् - धोना, तथैव - उसी प्रकार, पानीयम् - पीने योग्य, खादनीयम् - खाने योग्य, करणीया - करना चाहिए, संस्कृतौ - संस्कृति में, धरणीयम् - धारण करना चाहिए, उच्छिष्टम् - जूठा, पर्युषितम् - बासी, स्वास्थ्यघातकाः - स्वास्थ्य का नाश करने वाली, विषाणवः - हानिकारक जन्तु अद्यत्वे - आजकल।



# प्रामाणिकः काष्ठिकः

कः कश्चन काष्ठिकः आसीत्। तस्य समीपे लोहस्य कुठारः आसीत्। प्रतिदिनं वनं गत्वा कुठारेण काष्ठानि त्रोटयित्वा आनयति स्म तेषां विक्रयणं कृत्वा जीवनं यापयति स्म। वृक्षस्य अधः एकः कूपः आसीत्। एकदा काष्ठत्रोटनसमये तस्य कुठारः कूपे पतति। काष्ठिकः उच्चैः रोदनं करोति। तत्र वनात् कश्चन देवदूतः आगचछति । सः विषयं ज्ञात्वा जले कूर्दति। स्वर्णकुठारं च स्वीकृत्य आगच्छति। काष्ठिकः वदति –'मम नास्ति'। पुनः देवदूतः जले कूर्दनं कृत्वा रजतकुठारम् आनयति। काष्ठिकः तदपि न स्वीकरोति। अन्ततोगत्वा देवदूतः लोहकुठारम् आनयति। काष्ठिकः देवदूतं वदति – ''एषः मम कुठारः।'' देवदूतः काष्ठिकस्य सत्यप्रियतां ज्ञात्वा प्रसन्नः भवति। देवदूतः स्वर्ण-रजत-लोहकुठारत्रयमपि काष्ठिकय उपहाररूपेण ददाति। काष्ठिकः आनन्देन स्वगृहं गच्छति।

**आशयः** – सत्यप्रियता सर्वदा रक्षणीया।

**■ मृण्मयी रहालकर**
मस्कट्, ओमानः

**शब्दार्थः** – काष्ठिकः - लकड़हारा, कुठारः - कुल्हाड़ा, काष्ठानि - लकड़िया, त्रोटयित्वा - तोड़कर, आनयति स्म - लाता था, विक्रयणं कृत्वा - बेचकर, अधः - नीचे, कूपः - कुँआ, काष्ठत्रोटनसमये - लकड़ी तोड़ने के समय, उच्चैः - जोर से, रोदिति - रोता है, ज्ञात्वा - जानकर।



# अनुकरणशीलः लोकः

एकः भिक्षुकः। सः प्रतिगृहं गच्छति। भिक्षाटनं करोति। एकदा सः चिन्तयति – प्रतिदिनं भिक्षायाचनाकारणात् अहं अधिकं धनं सम्पादितवान्। अतः अधुना अहं काशीं गत्वा विश्वनाथदर्शनं करिष्यामि।

सः काशीं गच्छति। देवदर्शनात् पूर्वं सः स्नानं कर्तुम् इच्छति। अतः सः गङ्गानदीं गच्छति। स्नानानात् पूर्वं सः चिन्तयति – ''यदि स्नानसमये चोरः मम धनम् अपहरिष्यति तर्हि कष्टं भविष्यति।'' अनन्तरं सः एकम् उपायं करोति सः सिकतायां गर्तं करोति। तस्मिन् गर्ते धनपात्रं स्थापयति। तदनन्तरम् उपरि एकं शिवलिङ्गं स्थापयति। ''इतः परं मम धनपात्रस्य स्पर्शं कोऽपि न करिष्यति'' इति चिन्तयित्वा सः स्नानार्थं गच्छति। तदनन्तरम् एकः यात्रिकः आगच्छति। सः चिन्तयति– ''गङ्गातटे एकं शिवलिङ्गम् अस्ति। एकः च स्नानं करोति।'' अतः एषा काशीपरम्परा अस्ति यत् स्नानात् पूर्वं शिवलिङ्गं करणीयम्। इति'' अतः सः एकं शिवलिङ्गं निर्माति। स्नानार्थं गच्छति। अन्यः आगच्छति। सः अपि तथैव करोति। अनन्तरमपि बहवः जनाः एवमेव अनुकुर्वन्ति। अन्ते भिक्षुकः स्नानं कृत्वा आगत्य पश्यति–गङ्गातटे सहस्रशः शिवलिङ्गानि। स्वेन कृतं शिवलिङ्गं सः न प्राप्नोति। तस्य धनं नष्टम् इति ज्ञात्वा बहु दुःखम् अनुभवति सः।

■ **श्रीकृष्णशर्मा**
मिहिरावली, दिल्ली

**आशयः** – जनाः चिन्तनं विना एव अनुकरणे संलग्नाः भवन्ति।

**शब्दार्थः** – सम्पादितवान् - अर्जित किया, गत्वा - जाकर, अपहरिष्यति - चुरा लेगा, सिकतायाम् - बालू में, गर्तम् - गड्ढा, निर्माति - बनाता है, एवमेव - इसी प्रकार, अनुकुर्वन्ति - अनुकरण करते हैं, कृत्वा - करके, आगत्य - आकर, सहस्रशः - हजारों हजार, स्वेन - अपने द्वारा, ज्ञात्वा - जानकर, अनुभवति - अनुभव करता है।



# बुद्धिमती चटका

भानुनगरस्य राजा आसीत् भानुप्रतापः। तस्य महाराजस्य विशाले प्रासादे काचित् सुन्दरी वाटिका आसीत्। तस्यां वाटिकायां द्राक्षालताः आसन्। तत्र प्रतिदिनं काचित् चटका आगत्य मधुराणि द्राक्षाफलानि खादति स्म किञ्च अपक्वानि आम्लानि फलानि अधः क्षिपति स्म। अनेन कारणेन राजोद्यानपालकः अत्यन्तं खिन्नः जातः। सः तां चटकां ग्रहीतुं बहुविधान् प्रयत्नान् कृतवान् किन्तु सा चटका हस्तगता न जाता।

तदनन्तरं सः उद्यानपालकः निराशः सन् महाराजम् एतां वार्तां कथितवान्। एतादृशीं वार्तां श्रुत्वा महाराजः भानुप्रतापः आश्चर्यान्वितः जातः। सः मनसि एव निश्चितवान् यत् सा चटका अवश्यं मया शिक्षणीया।

कदाचित् राजा वाटिकायाम् आत्मानं गोपयित्वा स्थितवान्। यदा चटका प्रतिदिनमिव द्राक्षाम् आस्वादयितुं वाटिकाम् आगता तदा सः झटिति एव तां गृहीतवान्।

राजा यदा तां चटकां हन्तुम् उद्युक्तः तदा सा चटका उक्तवती – "हे राजन्! मां न मारयतु। अहं भवते ज्ञानसम्बद्धाः महत्त्वपूर्णाः चतस्रः वार्ताः बोधयामि।"

महाराजः उक्तवान् – "अस्तु, किन्तु एवमेव मम ग्रहणे भूत्वा शीघ्र वद।"

चटका उक्तवती – "भोः राजन्! सर्वप्रथमं तु हस्तगतः शत्रुः कदापि न त्यक्तव्यः।"

पुनः राजा वदति यत् द्वितीयां वार्तां वद। सा चटका उक्तवती – "या वार्ता कदापि न सम्भवति तत्र विश्वासः न कर्तव्यः।"

तृतीयवार्ता अस्ति – "गतायाः वार्तायाः विषये कदापि पश्चात्तापः मास्तु।"

एतत् श्रुत्वा राजा व्यग्रः भूत्वा उक्तवान् यत् चतुर्थवार्तामपि बोधय।

तदा चटका वदति – ''एषा अन्तिमा वार्ता अतीव गूढा, रहस्य-जनिका च अस्ति अतः मम ग्रहणं किञ्चित् शिथिलं करोतु। तेन मम श्वासावरोधः, शरीरवेदना च न भविष्यति। तदनन्तरमेव श्वासं स्वीकृत्य वार्तां वक्तुं शक्ष्यामि।''

चटकायाः वार्तां श्रुत्वा राजा यदैव तस्याः ग्रहणं शिथिलीकृतवान् तदैव सा उड्डीय एकस्यां वृक्षशाखायाम् उपविश्य उक्तवती – ''हे राजन्! शृणोतु, मम उदरे हीरकद्वयम् अस्ति।'' इति एतत् श्रुत्वा राजा पश्चात्तापे निमग्नः जातः।

राज्ञा तादृशीं स्थितिं दृष्ट्वा चटका उक्तवती – ''हे महाराज ! ज्ञानस्य वार्ताश्रवणेन पठनेन वा कोऽपि लाभः न भवति अपितु तस्मिन् विषये मननेन आचरणेन च लाभः।''

अहम् इदानीमेव भवते चतस्रः वार्ताः बोधितवती। भवान् श्रुत्वा अपि तस्मिन् विषये आचरणं न कृतवान् अतः भवतः पश्चातापः भवति।

महाराजः ! उक्तवान् – ''कथमेतत् ?''

चटका उक्तवती– ''अहं भवतः शत्रुः आसं तथापि भवान् मां स्वबन्धनात् विमोचितवान्। पुनश्च मम उदरे हीरकद्वयम् अस्ति इति अहम् उक्तवती। एतादृश्याम् असम्भववार्तायां भवान् विश्वासं कृतवान्। हीरकद्वयं मम हस्तात् गतमिति अनुभूय पश्चात्तापम् आरब्धवान्। अतः भवान् दुःखितः अस्ति।

**आशयः** – यावत् पर्यन्तम् उपदेशानां जीवने आचरणं न भवति तावत्पर्यन्तं तेषाम् उपदेशानां किमपि महत्त्वं नास्ति।

**शब्दार्थः** – काचित् सुन्दरी वाटिका - कोई सुन्दर बगीचा, तस्यां वाटिकायम् - उस वाटिका में, द्राक्षालता - अंगूर की लताएँ, आसन् - थी, आगत्य - आकर, खादति स्म - खाती थी, अपक्वानि फलानि - कच्चे फल, अधः - नीचे, ग्रहीतुम् - पकड़ने के लिए, बहुविधान् प्रयत्नान् कृतवान् - अनेक प्रयत्न किये, कथितवान् - कहा, श्रुत्वा- सुनकर, मनसि - मन में, निश्चितवान् - निश्चय किया, आत्मानं - स्वयं को, गोपयित्वा - छुपाकर, स्थितवान् - खड़ा रहा, आस्वादयितुम् - चखने के लिए, झटिति- तुरन्त, हन्तुम् - मारने के लिए, चतस्रः वार्ताः - चार बातें, त्यक्तव्यः - छोड़ना चाहिए, उड्डीय - उड़कर, विमोचितवान् – छोड़ दिया, अनुभूय - अनुभव करके, आरब्धवान् - आरम्भ किया।

## सूक्तिः

**प्राणिनां हि निकृष्टापि जन्मभूमिः परा प्रिया।।**

जो सुख अपने घर में, वह न किसी के दर में है।

EAST OR WEST HOME IS THE BEST.



# अतीव सुन्दरं ग्रामजीवनम्

भारतवर्षं ग्रामप्रधानः देशः अस्ति। अस्मिन् देशे अधिकाः जनाः ग्रामेषु निवसन्ति। ग्रामवासिनः ''ग्रामीणाः'' इति कथ्यन्ते। ग्रामीणानां जनानां दिनचर्या शोभना, शिक्षाप्रदा च भवति। ग्रामेषु ग्रामीणाः जनाः प्रातः चतुर्वादने उत्तिष्ठन्ति। ते स्नानादिकम् आवश्यकं कार्यं कृत्वा स्वकार्येषु संलग्नाः भवन्ति। ग्रामान् परितः सस्यैः पूर्णानि क्षेत्राणि भवन्ति। सर्वत्र सस्यश्यामला भूमिः दृश्यते। तत्र उद्यानेषु सुन्दराणि पुष्पाणि, फलानि च भवन्ति। ग्रामेषु स्वच्छः वायुः प्रवहति। अत्यन्तं शुद्धं जलं, दुग्धं, घृतं, खाद्यवस्तु च प्राप्यते। अतः ग्रामेषु स्वास्थ्यं समीचीनं भवति। तत्र जनाः हृष्टाः, पुष्टाः, बलवन्तः, प्रसन्नाः च भवन्ति।

**धीरजमैठाणी**
मेरठम्, उत्तरप्रदेशः

**शब्दार्थः** – अस्मिन् देशे – इस देश में, निवसन्ति – रहते हैं, कथ्यन्ते – कहा जाता है, परितः – चारों ओर, दृश्यते – देखा जाता है, उद्यानेषु – बगीचों में, प्राप्यते – पाया जाता है।




# भास्कराचार्यः

भास्कराचार्यः प्राचीनभारतस्य प्रसिद्धः गणितज्ञः, ज्योतिर्विद् च आसीत्। अस्य जन्म १२ शताब्दे कर्णाटकस्थे बीजापुरनामके ग्रामे जातम्। अस्य पितुः नाम महेश्वरभट्टः आसीत्। सः वेद-गणितादिविविधशास्त्राणां श्रेष्ठः विद्वान् आसीत्। भास्कराचार्यः ''सिद्धान्तशिरोमणिः'' इत्यस्य ग्रन्थस्य रचनां कृतवान्। अस्य ग्रन्थस्य चत्वारः भागाः सन्ति – अ) लीलावती, इ) बीज-गणितम्, उ) गोलाध्यायः, ऋ) ग्रहगणिताध्यायः च। लीलावती भास्कराचार्यस्य पुत्री आसीत्।

पितृ–पुत्रयोः संवादरूपेण एषः ग्रन्थः विलिखितः। भास्कराचार्यः स्वपुत्र्याः नाम्ना एव एतस्य ग्रन्थस्य नाम स्थापितवान्।

गणितक्षेत्रे भास्कराचार्यस्य महत् योगदानं वर्तते। सः एव तादृशः प्रथमः गणितज्ञः यः प्रतिपादितवान् यत् शून्येन विभाजिता या कापि सङ्ख्या अनन्ततां प्राप्नोति। सङ्ख्याप्रणाल्यादीनां विषये सविस्तरं विवरणं स्वग्रन्थे अकरोत्।

■ **डॉ० रत्नेशमणित्रिपाठी**
लखनऊ, उत्तरप्रदेशः

**शब्दार्थः** – जातम् - हुआ, चत्वारः - चार, विलिखितः - लिखा गया, नाम्ना - नाम से, स्थापितवान् - रखा, विभाजिता - भाग की गयी, तादृशः - वैसा, प्रतिपादितवान् – प्रतिपादन किया, प्राप्नोति - प्राप्त होता है, अकरोत् - किया।




# अन्ताराष्ट्रियः योगदिवसः

एषः ऐतिहासिकः दिवसः प्रत्येकं वर्षे जून-मासस्य २१ दिनाङ्के आयाति। एतत् दिनम् सर्वाधिकं बृहत् दिनं भवति। योगः अपि आयुः वर्धयति, अतः योगदिवसनिमित्तं दिनमेतत् चितम्।

प्रप्रथमं योगदिवसः २१ जून २०१५ तमे दिनाङ्के आचरितः। भारतस्य यशस्वी प्रधानमन्त्री श्रीनरेन्द्रमोदी २७ सितम्बर २०१४ दिनाङ्के अमेरिकादेशे संयुक्तराष्ट्र–महासभायां स्वभाषणे योगस्य महत्त्वं चर्चयन् अन्ताराष्ट्रिय–योगदिवस–निमित्तं प्रस्तावम् उपस्थापितवान्। तस्य परिणामतः २०१४ तमे वर्षे दिसम्बरमासस्य ११ दिनाङ्के संयुक्तराष्ट्रमहासभायाः १७७ सदस्यैः जूनमासस्य २१ दिनाङ्के योगदिवसम् आचरितुं मोदिवर्यस्य प्रस्तावः अङ्गीकृतः। ९० दिनेषु एव अस्माकं प्रधानमन्त्रिणा उपस्थापितस्य प्रस्तावस्य पूर्णबहुमतेन समर्थनम् आसीत्। ततः पूर्वम् महासभायाम् अन्यविध-अन्ताराष्ट्रियदिवसानां कृते उपस्थापित–प्रस्तावेषु एतस्य दिनस्य घोषणावधिः अल्पतमः आसीत्।

स्वभाषणे मोदीमहोदयः उक्तवान् आसीत् यत् योगः बुद्धेः, शरीरस्य च एकतायाः प्रतीकम् अस्ति। योगः भारतीयपरम्परायाः अमूल्यः उपहारः अस्ति। योगः मनुष्ये प्रकृतौ च सामञ्जस्यम् आनयति। योगः केवलं शारीरिकव्यायामः नास्ति अपितु अस्माकं परिवर्तनशीले जीवने चेतनायाः सञ्चारप्रदायकः अपि अस्ति। एतस्मिन् दिवसे सम्पूर्णेऽपि विश्वे योगसमुपासकाः प्राणायामम्, आसनम्, ध्यानादिकं च कुर्वन्ति। योगविषये विचार-मन्थनं सामूहिकविमर्शं च कुर्वन्ति। बहुत्र विविध – सांस्कृतिककार्यक्रमाणाम् आयोजनम् अपि कुर्वन्ति। भारते प्रथमयोगदिवसः चण्डीगढ़-नगरे, द्वितीयः लखनऊनगरे, तृतीयः देहरादून-नगरे, चतुर्थश्च राँचीनगरे समाचरितः आसीत्।

एतत् दिनं ''विश्वयोगदिवसः'' इति नाम्ना अपि प्रसिद्धम्।

■ **नूतनविष्णुरेग्मी**
सन्तकबीरनगरम्



# कीलोत्पाटी वानरः

किञ्चन नगरम्। तत्र कश्चन धनिकः आसीत्। सः चिन्तितवान् यत् अहम् एकस्य देवालयस्य निर्माणं करोमि। तदर्थं बहूनि वस्तूनि अपेक्षितानि आसन्। कर्मकराः तेषां सङ्ग्रहणम् आरब्धवन्तः।

केचन कर्मकराः काष्ठखण्डान् आनेतुं वनं गतवन्तः। ते एकस्य महावृक्षस्य छेदनं कृतवन्तः। क्रकचेन तस्य विदारणम् आरब्धवन्तः। यदा विदारणम् अर्धं समाप्तं तदा तेषां बुभुक्षा जाता अतः ते अर्धविदीर्णकाष्ठखण्डस्य मध्यभागे एकं कीलकं योजयित्वा आहारार्थं नगरं गतवन्तः।

तदनन्तरं कश्चित् वानरः तत्र आगतः। अर्द्धविदीर्णं काष्ठखण्डं दृष्ट्वा तस्य कुतूहलं जातम्। सः तत् कीलकम् उत्पाटयितुं प्रयत्नं कृतवान् परन्तु सः सफलः न जातः। अनन्तरं सः काष्ठखण्डस्य मध्यभागे सम्यक् उपविष्टवान्। तत्र योजितं कीलकं प्रयत्नपूर्वकम् उत्पाटितवान्। कीलकं तु बहिः आगतम्। परन्तु काष्ठमध्ये तस्य पादद्वयमपि आासीत् – अतः तस्य पादद्वयमपि भग्नम्। वेदनया पीडितः सः वानरः तत्रैव मृतः।

■ **रिषुकुमारः**
प्रतापगढम्, उत्तरप्रदेशः

**आशयः** – यत् कार्यं यस्य अस्ति सः करोति चेत् सम्यक् अन्यथा विपद् सम्भवति।

**शब्दार्थः** – चिन्तितवान् - सोचा, आरब्धवन्तः - आरम्भ किया, क्रकचेन - आरी के द्वारा (आरा), आनेतुम्- लाने के लिए, विदारणम् - फाड़ना, बुभुक्षा - भूख, कीलकं - कील, उत्पाटयितुम् - उखाड़ने के लिए, योजितम् - लगाया हुआ, भग्नम् - टूट गया, वेदनया - वेदना से, सम्यक् - ठीक से, उपविष्टवान् - बैठा।



# चिन्तनं विना कार्यं न करणीयम्

कश्चन ग्रामः। तत्र काचित् महिला वसति स्म। सा एकं नकुलं पालयति स्म। तस्याः नकुले बहु प्रीतिः आसीत्। तस्याः महिलायाः समीपे एकः शिशुः अपि आसीत्। तस्याः गृहस्य समीपे जलं नासीत् अतः सा प्रतिदिनं जल–आनयनार्थं बहु दूरं गच्छति स्म।

एकदा तस्याः गृहे कोऽपि नासीत्। तत्र तस्याः महिलायाः शिशुः शयानः आसीत्। सा बहिः गता।

तस्मिन् समये गृहं प्रति एकः सर्पः प्रविशति। नकुलः सर्पं पश्यति स्म। सर्पः शिशुसमीपम् अगच्छत्। नकुलः अनुक्षणम् एव सर्पं गृहीतवान्। तदनन्तरं तं सर्पं मारितवान् एव। महिला जलम् आनीतवती। नकुलः द्वारे एव आसीत्। सा नकुलस्य मुखम् अपश्यत्। तस्य मुखं रक्तमयम् आसीत्। सा अचिन्तयत् – ''एषः नकुलः निश्चयेन मम शिशुम् अखादत् अतः एतस्य मुखे रक्तम् अस्ति।'' इति।

सा नकुलस्य उपरि एकं शिलाखण्डम् अपातयत्। नकुलः मृतः। अनन्तरं महिला गृहस्य अन्तः अगच्छत्। तत्र शिशुः क्रीडति स्म। तस्य समीपे सर्पः मृतः आसीत्। सा बहु दुःखिता भवति। विचारं विना अहं नकुलम् अमारयम् इति तस्याः महान् पश्चात्तापः भवति।

■ **अमनदूबे**
प्रतापगढम्, उत्तरप्रदेशः

**आशयः** — सम्यक् विचारं कृत्वा एव कार्यं करणीयम्।

**शब्दार्थः** — वसति स्म - रहती थी, नकुलम् - नेवला को, पालयति स्म - पालती थी, आनयनार्थम् - लाने के लिए, कोऽपि - कोई भी, तस्मिन् समये - उस समय, प्रविशति - प्रवेश किया, अनुक्षणम् - शीघ्र ही, अपश्यत्- देखा, द्वारे - दरवाजे पर, अचिन्तयत् - सोचा, अखादत् - खाया, अपातयत् - गिराया, अगच्छत् - गई, क्रीडति स्म - खेल रहा था, अमारयम् - मार दिया।

# सकरदीपं समागताः मशकाः



एकस्य वृक्षस्य अधः मित्रद्वयं शयनं करोति स्म। किञ्चितकालान्तरं मशकाः दशनम् आरब्धवन्तः। तेन द्वौ अपि बहु कष्टम् अनुभूतवन्तौ। अनन्तरं द्वौ अपि अन्यस्य वृक्षस्य अधः गत्वा शयनं कृतवन्तौ। किंञ्चित् कालान्तरं तत्र केचन खद्योताः भ्रमणम् आरब्धवन्तः। तदा एकः अपरं मित्रं प्रति वदति — ''पश्यत भोः एते मशकाः कीदृशाः वराकाः सन्ति। तत्रापि दशनं कुर्वन्ति स्म अत्रापि एते करदीपान् स्वीकृत्य दशनार्थम् अन्वेषणं कुर्वन्ति।'' इति।

**शब्दार्थः** — सकरदीपम् - टार्च के साथ, समागताः - आए, मशकाः - मच्छर, खद्योताः - जुगनू, वराकाः - बदमाश।

# शिष्टाचारः
## (शिष्टाचार)

| | | |
|---|---|---|
| सुप्रभातम् | – | सुप्रभात |
| नमस्कारः | – | नमस्कार |
| शुभमध्याह्नः | – | शुभमध्याह्न |
| शुभरात्रिः | – | शुभरात्रिः |
| धन्यवादः | – | धन्यवाद |
| स्वागतम् | – | स्वागत |
| श्रीमन् | – | श्रीमान् |
| मान्ये / आर्ये | – | श्रीमती जी |
| अस्तु | – | ठीक है। |
| कृपया | – | कृपया |
| चिन्ता मास्तु | – | चिन्ता मत कीजिए। |
| क्षम्यताम् | – | क्षमा कीजिए। |
| पुनः मिलामः | – | फिर मिलेंगे। |
| बहु समीचीनम् / साधु साधु | – | बहुत अच्छा |
| उत्तमम् | – | अच्छा है। |
| बाढम् बोढम् | – | वाह! वाह! |
| शुभाशयाः | – | शुभेच्छा |
| अभिनन्दनानि | – | अभिनन्दन |




**कृष्टि**
मुरादाबाद, उत्तरप्रदेशः

## वर्णान् पूरय



# बालकथाकौमुदी

सम्पादकः – डा० विश्वासः



उत्तरप्रदेशसंस्कृतसंस्थानम्
लखनऊ

मूल्यम् – 50/– रूप्यकाणि